**नाहं प्रकाशः सर्व्वस्य योगमायासमावृतः ।**
**मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥२५॥**

मम भूतमहेश्वरम् ॥" (९।११) इति । 'भूतमहेश्वरम्' इति विशेषणेनान्तर्यामितया धर्म्मसंस्थापनादिहेतोः कस्मिंश्चिल्लोकातीतप्रकृष्टं प्रादुष्कृतं स्वज्ञानमिति लक्ष्यते । विमूढास्तज्ज्ञानं तस्य मनुष्यस्यैव न तु परस्येति मन्वाना न तच्छ्रद्दधते, अतएवाह अवजानन्ति मामिति । कृतान्तेऽस्मिन्ननादृते "मया ततमिदं सर्व्वं जगदव्यक्तमूर्त्तिना । मत्स्थानि सर्व्वभूतानि" (९।४) इत्यादिप्रोक्त ऐश्वरो योगो न सिध्यति ।२४।

कथं न ते जानन्तीत्याह नाहमिति । योगमायासमावृतः योगः सृज्यशक्तीनां सम्मेलनं स एव माया प्रकटभावापन्ना प्रकृतिः तया समावृत आच्छादितोऽहमन्तर्यामी सर्व्वस्य लोकस्य न प्रकाशः प्रकटः, अतः अयं मूढः विवेकज्ञानशून्यो लोकः माम् अजं जन्मरहितम् अव्ययं सदैकरूपं नाभिजानाति । योगः—"गुणानां युक्तिघटनम्" इति श्रीमच्छङ्करः, "मनुष्यत्वादिसमानसंस्थानम्" इति श्रीमद्रामानुजः, "योगेन सामर्थ्योपायेन" इति श्रीमन्माध्वः, "अचिन्त्यः प्रज्ञाविलासः" इति श्रीमच्छ्रीधरः, "भगवद्विमुखव्यामोहकत्वं योगः" इति श्रीमद्बलदेवः, 'सङ्कल्पः' इति श्रीमन्मधुसूदनः, "हे योग योगिन्" इति श्रीमन्नीलकण्ठः, "गुणैर्योग एव माया" इति श्रीमद्धनूमान्, श्रीमन्माध्वधृतपाद्मवचने—"आत्मनः प्राकृतस्यैव लोकचित्तस्य बन्धनम् । स्वसामर्थ्येन देव्या च कुरुते स महेश्वरः ॥" इति सामर्थ्यमेव योग इति व्यज्यते । वयन्तु सृज्यशक्तीनां सम्मेलनमेव योग इति मन्यामहे । कथम् ? यदा हि भगवतश्चिच्छक्तिमायया सृष्ट्युन्मुखा भवति तदैव ततः सृज्यशक्तीनां प्रादुर्भावः, तासां सम्मेलनेनैव प्रकृतिकार्य्यं जगदुत्पद्यते, उत्पद्यमानं तद्ब्रह्मावरकं भवति, अतएव सृज्यशक्तिसम्मेलनरूपा माया भगवत्प्रज्ञा भगवन्तमावृणोति तद्गतत्वात् । स तु भगवान् तद्गतोऽपि तदतीत इति ज्ञानिनां दृष्टिर्न तु प्राकृतजनानाम् । २५ ।

वेदाहं समतीतानि वर्त्तमानानि चार्ज्जुन।
भविष्याणि च भूतानि मान्तु वेद न कश्चन ॥२६॥

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत।
सर्व्वभूतानि सम्मोहं सर्गे यान्ति परन्तप ॥२७॥

योगमायासमावृत इत्युक्तेः किन्तयाच्छादितज्ञानस्त्वमिति संशयं निरसितुमाह वेदेति। हे अर्ज्जुन, समतीतानि भूतानि, वर्त्तमानानि विद्यमानानि, भविष्याणि आगामीनि भूतानि चराचराणि सर्व्वाणि अहं, सर्व्वान्तर्यामी वेद जानामि, मान्तु कश्चन न वेद। अतएव न मां भजते। २६।

सर्व्वान्तर्यामिणं त्वां हृद्यवस्थितेऽपि कथं न ते जानन्तीत्यपेक्षया तत्कारणमाह इच्छेति। सर्व्वभूतानि निखिलप्राणिनः इच्छाद्वेषसमुत्थेन इच्छा च द्वेषश्च इच्छाद्वेषौ ताभ्यां समुत्तिष्ठतीति इच्छाद्वेषसमुत्थस्तेन द्वन्द्वमोहेन सुखदुःखशोभनाशोभनसत्यासत्यनित्यानित्यात्मानात्मसु यो मोहविपर्य्ययस्तेन सर्गे—'सृष्टिविषये' इति श्रीमन्नीलकण्ठः, 'जन्मन्युत्पत्तिकाले' इति श्रीमच्छङ्करोऽन्ये च, 'जगत्सृष्ट्यारम्भकाले' इति श्रीमद्विश्वनाथः, 'सर्गे सर्गकाले आरभ्यैव, शरीरे हि सति इच्छादयः, पूर्व्वन्त्वज्ञानमात्रम्' इति श्रीमन्माध्वः। हे भारत, हे परन्तप, सम्मोहं सम्मूढतामविवेकं यान्ति। व्याख्यातॄणां व्याख्यानानामेवं सामञ्जस्यं भवति। सुखे दुःखं दुःखे सुखं, शोभनेऽशोभनम् अशोभने शोभनम्, सत्येऽसत्यमसत्ये सत्यम्, नित्येऽनित्यम् अनित्ये नित्यम्, आत्मन्यनात्मा अनात्मन्यात्मा, एवमिच्छाद्वेषजनितं मिथ्याज्ञानं सृष्टिविषये जनानां भवति। ततो जिज्ञासोपतिष्ठते। कुतोऽस्य मिथ्याज्ञानस्यारम्भः? शरीरारम्भात्। न हि शरीरमुपादानमनपेक्ष्योत्पद्यते, यदि नोपादाने मिथ्याज्ञानस्य स्थितिः स्यात्, कुतो वा तस्य शरीरे संक्रमः? पितृतो मातृतश्चेत्, तयोरपि कुत इति जिज्ञासोपतिष्ठते। परम्परयेत्युत्तरे,

येषामन्तगतं पापं जनानां पुण्यकर्म्मणाम् ।
ते द्वन्द्वमोहनिर्म्मुक्ता भजन्ते मां दृढ़व्रताः ॥२८॥

आरम्भकाले कुत इति जिज्ञासायां जगत्सृष्ट्यारम्भादेव मिथ्याज्ञानस्य जीवे प्रतिष्ठायाति । "ज्ञाज्ञौ द्वावजावीशनीशौ" (श्वे, उ, १।९) इति जीवनिष्ठाज्ञानता प्रारम्भादेवेति सिध्यति । कथं तस्मिन्नज्ञानता प्रारम्भादिति जिज्ञासा निष्फला, न जातु तस्मिन्ननन्तज्ञानं सम्भवत्य-नीश्वरत्वात्, सति पुनः स्वीकार्य्येमीश्वरद्वयम् । तत्त्वसम्भवं द्वयोरनन्त-योर्ऽतो नावसरः । वस्तुतस्तु सृष्टिविषये पूर्णज्ञानं स्रष्टुः परमेश्वरस्य, न तु सृष्टस्य जीवस्य । आत्मनि प्रकृतिसंसर्गकालादेव कामस्य तस्मिन् स्थितिः प्रतिपादिता प्राक् । न हि कामो जातु तद्विपरीतेनाकामेन विना स्यातुं शक्यते । यं कञ्चिद्विषयमधिकृत्य कामस्योदयः, तद्विप-रीतेऽकामो द्वेषो वा स्वभावत एवोपतिष्ठते । अतोऽज्ञानेन मिथ्या-ज्ञानेन मोहेनैतयोः सम्बन्धः स्वाभाविकः । एवं पश्यामो व्याख्यातृभिः प्राग्भ्यमवर्त्तमानावस्था अधिकृतत्र व्याख्यातमिदं पद्यमिति सर्व्वं समञ्जसम् । २७ ।

यदि प्रारम्भादेव मोहस्तदा जीवानां तस्मान्मुक्तिर्न सम्भवतीतरा-शङ्कानिवारणायाह येषामिति । येषां पुण्यकर्म्मणां पुण्याचरणशीलानां जनानां पापं दुष्कृतं मोहजनितभगवदिच्छाविरोधि कार्य्यम् अन्तगतं क्षयप्राप्तं, ते द्वन्द्वमोहनिर्म्मुक्ता दृढ़व्रता दृढ़नियमपरायणा मामन्तर्यामिणं भजन्ते । अत्रेदं तत्त्वमुद्भूयते । सत्त्वरजस्तमोगुणसंसर्गाज्जीवजन्म । तेषु कोऽपि सत्त्वगुणप्रधानः, कोऽपि रजोगुणप्रधानः, कोऽपि तमोगुण-प्रधान इति गुणानुसारि भवति आचरणम् । न हि तैं गुणानुसारतः स्वस्वाचरणे चिरनिरुद्धः । यतो गुणव्यतिकरं विना न कस्यापि सम्भवः, अतो यद्यद्गुणानुकूलमाचरणं यस्मिन् घटते तत्तद्गुणस्योपचयः तद्विपरीतगुणस्यापचय उपतिष्ठते । अस्ति हि सर्व्वस्मिन् देहभृति सत्त्वगुणस्य प्रवेशः । तमवलम्ब्यात्र पुण्याचरणेन भवति सत्त्वगुणोद्रेकः ;

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥२९॥
साधिभूताधिदैवं मां साधियज्ञञ्च ये विदुः।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥३०॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विज्ञानयोगो नाम सप्तमोऽध्यायः।

तेन च चित्तं स्वच्छत्वमेति। चित्ते स्वच्छे भगवद्दर्शनोपयोगितोपतिष्ठते, तद्भजने स्पृहा च। २८।

किमर्थन्ते भगवन्तं सर्वान्तर्यामिणं भजन्ते तदाह जरेति। मामन्तर्यामिणमाश्रित्य जरामरणमोक्षाय जरामरणयोर्मोक्षार्थं ये यतन्ति यतन्ते मदर्पितानि फलाभिसन्धिशून्यानि विहितानि कर्म्माणि कुर्व्वन्ति ते तद्ब्रह्म अक्षरम, कृत्स्नं समग्रम् अध्यात्मं स्वभावम् आत्मस्वरूपम्, अखिलञ्च कर्म्म विदुर्विजानन्ति। परमात्माश्रयणेन तेषां ब्रह्मविषयकमात्मविषयकमाज्ञापालनरूपकर्म्मविषयकं ज्ञानमुत्पद्यते। २९।

मृत्युकालेऽपि भगवद्भक्तानां तद्विस्मरणं नाशङ्कनीयमित्याह साधिभूतेति। साधिभूताधिदैवम् अधिभूतञ्चाधिदैवञ्च अधिभूताधिदैवं तेन सह वर्त्तते साधिभूताधिदैवं साधियज्ञञ्च यत्किञ्चिज्जनिमहस्तु, पुरुषं देहवर्त्तियज्ञाधिष्ठातृदेवञ्चान्तर्भूय वर्त्तमानं मामन्तर्यामिणं ये विदुः, ते युक्तचेतसः मय्यासक्तमनसः प्रयाणकालेऽपि मृत्युकालेऽपि मां विदुः विजानन्ति।

अस्मिन्नध्यायस्याध्यायसंग्रहे श्रीमद्यामुनमुनिः—"स्वयाथात्म्यं प्रकृत्यास्य तिरोधिः शरणागतिः। भक्तभेदः प्रबुद्धस्य श्रैष्ठ्यं सप्तम उच्यते॥" श्रीमद्धरिः—"तदनेन सप्तमेनोत्तममधिकारिणं प्रति ज्ञेयं निरूपयता तदर्थमेव सर्व्वात्मकत्वादिमुपदिशता प्रकृतिद्वयद्वारेण सर्व्वकारणत्वा-

दिति च वदता तत्पदवाच्यं सप्रपञ्चोपलक्षितम् ।” श्रीमद्बलदेवः—“मां विदुस्तत्त्वतो भक्ता मन्मायामुत्तरन्ति ते । ते पुनः षड्विधेत्येष सप्तमस्य विनिर्णयः ॥” श्रीमन्मधुसूदनः—“तदन्त्यमाधिकारिणं प्रति ज्ञेयं, मध्यमाधिकारिणं प्रति ध्येयं, लक्षणया मुख्यया च वृत्त्या तत्पदप्रतिपाद्यं ब्रह्म निरूपितम् ।” श्रीमद्विश्वनाथः—“भक्ता एव हरेस्तत्त्वविदो मायां तरन्ति च । ते चोक्ताः षड्विधा भक्त्याध्यायार्थो निरूपितः ॥” इति । ३० ।

इति श्रीमद्भगवद्गीतासमन्वयभाष्ये सप्तमोऽध्यायः ।

---

# अष्टमोऽध्यायः ।

अर्जुन उवाच—

किं तद्ब्रह्म किमध्यात्मं किं कर्म्म पुरुषोत्तम ।
अधिभूतञ्च किं प्रोक्तमधिदैवं किमुच्यते ॥१॥
अधियज्ञः कथं कोऽत्र देहेऽस्मिन् मधुसूदन ।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥२॥

श्रीभगवानुवाच—

अक्षरं परमं ब्रह्म स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्म्मसंज्ञितः ॥३॥

अतीताध्यायान्ते प्रश्नबीजान्युपक्षिप्तानि "ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मम्" इत्यादिना। ब्रह्मशब्दस्य भिन्नार्थे प्रयोगो न विरलस्त्वात्मशब्दस्य च। "विज्ञानं यज्ञं तनुते कर्म्माणि तनुतेऽपि च" (तै, उ, २।५) इति श्रुतौ कर्म्मणोऽपि द्वैविध्यम्। अधिभूतशब्देन किंवा पृथिव्यादिकृत्स्नकार्य्यजातं बोध्यते, उत किञ्चिदेव, तथा चाधिदैवतशब्देन देवविषयकमनुध्यानमादित्यमण्डलादिष्वधिष्ठितं चैतन्यं वा, चाधियज्ञशब्देन यज्ञमधिकृतो विज्ञानात्मा परमात्मा वाभिप्रेयत इति प्रश्नकारणानि पश्यन् पृच्छत्यर्ज्जुनो द्वाभ्यां, किन्तदिति, अधियज्ञ इति। किन्तद्ब्रह्म इत्येकः, किमध्यात्ममिति द्वितीयः, किं कर्म्म इति तृतीयः, किमधिभूतमिति चतुर्थः, किमधिदैवमिति पञ्चमः, अधियज्ञः कथं केन प्रकारेण चिन्तनीयः किं स बुद्ध्यादिस्तद्व्यतिरिक्तो वेति षष्ठः, प्रयाणकाले अन्तकाले नियतात्मभिः नियतचित्तैः पुरुषैः कथं केनोपायेन ज्ञेयोऽसीति सप्तमः प्रश्नः। ज्ञेयत्वेन सप्त पदार्था एवं सूचिता इति प्राञ्चः। १।२।

अर्ज्जुनपरिप्रश्नोत्तरमाह अक्षरमिति, अधिभूतमिति, अन्तकाले

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥४॥
अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥५॥

इति । प्रथमस्य किन्तद्ब्रह्मेत्यस्योत्तरम्—अक्षरं परमं ब्रह्म ; न क्षरतीत्यक्षरं परमात्मा, "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः । एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः" (वृ, आ, उ, ४।८।९) इति ; द्वितीयस्य किमध्यात्ममित्यस्योत्तरम्—स्वभावोऽध्यात्ममिति, स्वभावः स्वो भावः स्वरूपमध्यात्मम्, प्रकृतिसंसर्गवशाद्देहे भोक्तृत्वेन प्रकाशमानमात्मस्वरूपम ; तृतीयस्य किं कर्म्मेत्यस्योत्तरम्—भूतभावोद्भवकरो विसर्गः कर्म्मसंज्ञितः, भूतानां भावं सात्त्विकादिस्वभावमुद्भवञ्च करोति यो विसर्गस्त्यागो देवोद्देशे द्रव्यवितरणम, स कर्म्मसंज्ञितः कर्म्मशब्दितः, यतो भूतानां स्वभावप्राप्तिरुत्पत्तिश्च तत्कर्म्मेति फलितार्थः ; चतुर्थस्य अधिभूतञ्च किमित्यस्योत्तरम्—अधिभूतं क्षरो भावः, क्षरतीति क्षरो विनाशी भावो वस्तु यत्किञ्चिज्जनिमद्वस्त्वित्यर्थः, अधिभूतं प्राणिजातमधिकृत्य भवतीत्यधिभूतम् ; पञ्चमस्य अधिदैवं किमित्यस्योत्तरम्—पुरुषश्चाधिदैवतम्, पुरुषः समष्टिविराट् अधिदैवतमग्न्यादित्यादिदेवानधिकृत्य चक्षुरादिकरणान्यनुगृह्णातीत्यधिदैवतम् ; षष्ठस्य अधियज्ञः कथं क इत्यस्योत्तरम्—अधियज्ञोऽहमेवात्र देहे, अत्र देहेऽधियज्ञः सर्व्वयज्ञाभिमानिनी देवता "यज्ञो वै विष्णुः" इति श्रुतेरहमेव । यज्ञस्य मनुष्यदेहनिर्व्वर्त्यत्वात् देहे तदभिमानिन्या देवतायाः स्थितिः, तथाहि श्रीमन्माध्वधृते गीताकल्पे, "देहस्थविष्णुरूपाणि अधियज्ञ इतीरितः । कर्म्मेश्वरस्य स्पष्ट्यर्थं तच्चापीच्छाद्यमुच्यते ॥ अधिभूतं जड़ं प्रोक्तमध्यात्मं जीव उच्यते । हिरण्यगर्भोऽधिदैवं देवः सङ्कर्षणोऽपि वा । ब्रह्म नारायणो देवः सर्व्वदेवेश्वरे

श्वरः ॥" इति ; ममस्य अन्तकाले कथं ज्ञेयोऽसीत्यस्य— अन्तकाले मरणकाले मामेवान्तर्यामिणं परमेश्वरं स्मरन् कलेवरं देहं त्यक्त्वा यः प्रयाति स मद्भावं मत्स्वरूपं याति प्राप्नोति, अत्र न संशयोऽस्ति ।

श्रीमद्रामानुजेन तदनुसारिणा श्रीमद्बलदेवेन, अक्षरं समष्टिरूपं चेतनं परमं प्रकृतिविनिर्मुक्तात्मस्वरूपम् ; स्वभावः स्वस्य जीवस्य भावः भूतसूक्ष्मं तद्वासनादिकञ्च, पञ्चाग्निविद्यायां मनुष्यादिभावोद्भवकरो यो विसर्गः श्रद्धासोमादिरूपस्तत् कर्म इति व्याख्यातम् । यदपि वयं श्रीमच्छङ्करस्तदनुयायिनौ श्रीमन्मधुसूदननीलकण्ठौ च तत्सम्प्रदायस्य प्रतिनिधित्वेन, श्रीमद्रामानुजमाध्वाचार्यौ तयोर्भावानुसारिणौ तत्सम्प्रदाययोः प्रतिनिधित्वेन श्रीमद्बलदेवविश्वनाथाविवावलम्बितवन्तो गीतार्थनिर्णयाय, तथाप्यन्येषां व्याख्यातॄणां प्रोक्तसम्प्रदायानुवर्त्तिनां यथासम्भवं व्याख्यानसमालोचने नास्माकमनादरोऽस्ति । अतः श्रीमत्कल्याणभट्टविरचितायां रसिकरञ्जन्यां पदे पदे प्रकाशमानः स्वरविश्लेषेण पदाक्षरविभजनेन च भक्तिपक्षसमर्थनाय महान् प्रयासो यदपि नास्माकं रुचिकरः, तथाप्यत्र तस्य 'अक्षरं परमं ब्रह्म' इत्यस्य व्याख्यानस्य तदंशं न वयमुपेक्षामहे यस्मिन् ब्रह्म विभूतित्वेन परिगृहीतम् । तद्यथा—"एकादशे 'पृथिवीवायुराकाश आपो ज्योतिरहं महान् । विकारः पुरुषोऽव्यक्तं रजः सत्त्वं तमः परम् ॥' इत्यत्र परमित्यनेन परं ब्रह्मेति व्याख्यया च तस्य विभूतित्वोक्तेः ; ब्रह्मसंहितायां—'यस्य प्रभाप्रभवतो जगदण्डकोटिकोटिष्वशेषवसुधादिविभूतिभिन्नम् । तद्ब्रह्म निष्कलमनन्तमशेषभूतं गोविन्दमादिपुरुषं तमहं भजामि ॥ इत्युक्त्या । अत्र कारिके—'निष्कलादिस्वरूपं तत् ब्रह्माण्डार्बुदकोटिषु । विभूतिभिर्धराद्याभिर्भिन्नं भेदमुपागतम् ॥ सदाप्रभावयुक्तस्य ब्रह्म यस्य प्रभा भवेत् । तं गोविन्दं भजामीति पद्यार्थः स्फुटीकृतः ॥' इति । श्रीमद्भागवतामृतस्य तद्व्याख्यया च विभूतित्वव्यञ्जनात् ।" इति । श्रीमद्भागवतामृत हरिभक्तिरसामृतसिन्धुप्रभृतिषु ब्रह्मणो भगवद्विभूतित्वं दृश्यते, यथा श्रीमद्भागवतामृते—"भगवांस्तु परब्रह्म परात्मा परमेश्वरः ।

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥६॥

समान्द्रसच्चिदानन्दविग्रहो महिमार्णवः ॥ सगुणत्वागुणत्वादिविरोधाः प्रविशन्ति तम् । महाविभूतिर्ब्रह्मास्य प्रसिद्धत्यं तयोर्भिदा ॥" इति । "परात्परं ब्रह्म च ते विभूतयः" इति तट्टीकाधृतोक्तिः । हरिभक्तिरसामृतसिन्धौ च यथा—"यदरीणाञ्च प्रियाणाञ्च प्राप्यमेकमिवोदितम् । तद्ब्रह्मकृष्णयोरैक्यात् किरणार्कोपमाजुषाः ॥" "सच्चिदानन्दसान्द्राङ्गश्चिदानन्दघनाकृतिः ।" इत्यत्र "यस्य प्रभाप्रभवतः" इति ब्रह्मसंहिता वचनमुद्धृत्य सिद्धान्तितम्—"अतः श्रीविष्णवैः सर्व्वश्रुतिस्मृतिनिदर्शनैः । तद्ब्रह्म श्रीभगवतो विभूतिरिति कीर्त्यते ॥ इति । अत्र यत् विचार्य्यमस्ति वक्ष्यते तद्यादृशं । श्रीमत्कल्याणभट्टस्वीकृते सम्प्रदाये ब्रह्मणो विभूतित्वनिर्व्वचनं प्रामादिकम्, यतस्तैर्भगवतो ब्रह्मोपादानत्वं स्वीकृतम् । यथा श्रीमद्भागवतामृते—"सदा सम्यक्त्वयि बहुतरविशेषं वितनुते यथा स्वस्मिंस्तत्तत्प्रकृतिरहितेऽपि प्रभुवतरम् ।" टीका च, "एतदुक्तं भवति परब्रह्मरूपत्वेन स्वभावतो निर्व्विशेषस्यापि स्वस्य परमाकाशादिरूपेण विचित्रावतारात्मतया यथा" इति । भगवतो ब्रह्मोपादानत्वे तस्यैव विभूतित्वमाविष्टस्वरूपत्वं न तु ब्रह्मण इति कोऽपि नास्वीकर्त्तुं समर्थः । "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" (श्वे, उ, ४।७) ; "तमेव भान्तमनुभाति सर्व्वं तस्य भासा सर्व्वमिदं विभाति" (कठ, ५ १५) इत्यत्र महिमत्वं भारूपत्वं न ब्रह्मणो विभूतित्वं प्रतिपादयति, प्रत्युत ब्रह्मणा जीवजगतोः सम्बन्धमेव दर्शयति । निर्व्विशेषसविशेषविचारे या भ्रान्तिर्विद्यते सापि वक्ष्यते सविचारं तत्र । ३—५ ।

अन्तकाले पूर्व्वनियतचिन्तनानुरूपैव चिन्ता समुदेति, अतः भगवच्चिन्तया भगवत्प्राप्तिरन्यविषयचिन्तयान्यविषयप्राप्तिरित्याह यं यमिति । हे कौन्तेय, सदा नियतं तद्भावभावितः तत्पदार्थचिन्तया वासितचित्तः

तस्मात् सर्व्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ॥७॥
अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥८॥
कविं पुराणमनुशासितार-
मणोरणीयांसमनुस्मरेद्यः ।
सर्व्वस्य धातारमचिन्त्यरूप-
मादित्यवर्णं तमसः परस्तात् ॥९॥

यं यं वापि भावं पदार्थं स्मरन् अन्ते मरणकाले कलेवरं देहं त्यजति तं तं भावं पदार्थं याति प्राप्नोति। चिन्तामयो हि पुरुषः, चिन्तारूपा हि तस्य गतिः, चिन्तया हि को वा किंस्वरूपोऽधुना वर्त्तते भविष्यति च भविष्यति ज्ञायते इति तत्त्वम् । ६ ।

यतः पूर्वनियतचिन्तनानुरूपैवान्त्या चिन्ता भवति, तया च तदनुगुणा गतिरत आह तस्मादिति। यत एवं तस्मात् सर्व्वेषु कालेषु मामन्तर्यामिणमनुस्मर चिन्तय, युध्य च युध्यस्व स्वधर्म्मं कुरु। एवमन्तर्यामिणि अर्पिते मनोबुद्धी यस्य स त्वं मामन्तर्यामिणम् एष्यसि प्राप्स्यसि, असंशयो नास्ति संशयोऽत्र । ७ ।

सततानुचिन्तनेऽभ्यासो हि कारणमतस्तमेवाहाभ्यासेति। अभ्यासः सजातीयप्रत्ययप्रवाहः 'विराड्भूतान्तर्यामिषु मनसः स्थिरीकरणार्थो यत्नोऽभ्यासः' इति श्रीमन्नीलकण्ठः, स एव योगस्तेन युक्तेन अनन्यगामिना नान्यत्र गन्तुं शीलमस्येति तेन चेतसा चित्तेन, हे पार्थ, अनुचिन्तयन्ननुध्यायन् दिव्यं—'सृष्ट्यादिक्रीड़ायुक्तं' दिवु क्रीड़ेति धातोः' इति श्रीमन्माध्वः—अप्राकृतं द्योतनात्मकं परमपुरुषं याति प्राप्नोति । ८ ।

तं दिव्यं पुरुषं विशिनष्टि कविमिति। कविं सर्व्वज्ञं, पुराणं

प्रयाणकाले मनसाऽचलेन
भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यम् ॥१०॥

चिरन्तनमनादिम्, अनुशासितारं नियन्तारमुपदेष्टारम्, अणोरणीयांसं सूक्ष्मादपि सूक्ष्मतरम्, सर्व्वस्य धातारं धारणपोषणकर्त्तारम्, अविचिन्त्यरूपं नियतविद्यमानमप्यस्य रूपं न केनचिच्चिन्तयितुं शक्यते इत्यविचिन्त्यरूपम्, आदित्यवर्णम् आदित्यस्येव स्वपरप्रकाशको वर्णः स्वरूपं दीप्यमानता यस्य तम्, तमसः परं तमोऽव्यक्तं प्रकृतिः ततः परस्तादुपरिष्टात् विद्यमानम्, "तमसः परस्तादज्ञानलक्षणान्मोहान्धकारात् परं तमनुचिन्तयन् यातीति पूर्व्वेणैव सम्बन्धः" इति श्रीमच्छङ्करः, अन्ये तु 'स तं परं पुरुषमुपैति दिव्यम्' इति परेण सम्बन्धमुक्तवन्तः । 'सप्रपञ्चप्रकृतिं भित्त्वा यस्तिष्ठति एवम्भूतं पुरुषम्' इति श्रीमच्छ्रीधरः, सप्रपञ्चप्रकृतिमन्तर्भूयोपरिष्टात् तदतीतत्वेन विद्यमानमिति वयम् । ९ ।

प्रयाणकाल इति । प्रयाणकालेऽन्तकाले अचलेन स्थिरेण मनसा भक्त्या परमेश्वरविषयेण परमेण प्रेम्णा युक्तः योगबलेन स्वचित्तस्थैर्य्यलक्षणस्य योगस्य बलेन भ्रुवोर्मध्ये प्राणं सम्यक् आवेश्य भगवच्चिन्तनस्थानाद्धृदयात् हार्दं प्राणं भ्रुवोर्मध्ये सम्यक् निवेश्य, तत्र परमपुरुषचिन्तापरायणः सन्नित्यर्थः, तं दिव्यं परं पुरुषमुपैति प्रपद्यते । मरणकाले हृत्पिण्डस्य क्रियाशैथिल्याच्छ्वासकृच्छ्रता, तयोर्द्ध्वगामित्वं श्वासस्य । श्वासो हि प्राणक्रिया । अतएव श्वासञ्च प्राणञ्चाभिन्नभावेन गृहीत्वा प्राणक्रियाश्वाससहकारेण भगवच्चिन्तनाभ्यासवान् योगी प्रयाणकाले हार्दस्य प्राणस्योर्द्ध्वगामित्वादूर्द्ध्वभूमावेव भ्रुवोर्मध्ये भगवच्चिन्तनानुरतो भवति, योगेन च तनुं त्यजतीति फलितार्थः । योगेन तनुत्यागे ब्रह्मसंस्पर्शानन्देन मुखं प्रसन्नं प्रस्फुटितकमलमिव प्रफुल्लं भवतीति प्रत्यक्षम् । १० ।

यदक्षरं वेदविदो वदन्ति
विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति
तत् ते पदं संग्रहेण प्रवक्ष्ये ॥११॥
सर्व्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥१२॥
ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥१३॥

अन्तकालेऽवलम्बनीयमुपायं सङ्क्षेपेण वक्तुमुपक्रमते यदक्षरमिति । वेदविदो ब्रह्मज्ञा यदक्षरं वदन्ति—"एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वम" इत्यादि (बृ, आ, ५।८।८) ; वीतरागा निस्पृहा यतयो यत्नशीलाः यत् विशन्ति प्राप्नुवन्ति, यत् अक्षरमिच्छन्तो ज्ञातुमिच्छवः ब्रह्मचर्य्यं चरन्ति, तत्तेऽक्षराख्यं ब्रह्माख्यं पदं संग्रहेण सङ्क्षेपेण प्रवक्ष्ये कथयिष्यामि । पद्यमिदं कठोक्तस्य प्रवचनस्यानुरूपम्, तद्यथा "सर्व्वे वेदा यत्पदमामनन्ति तपांसि सर्व्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति तत्ते पदं सङ्क्षेपेण ब्रवीमि ; ओमित्येतत् ॥" (१।२।१५) इति । ११ ।

योगधारणमाह सर्व्वद्वाराणीति ; ओमिति । सर्व्वद्वाराणि करणेन्द्रियद्वाराणि संयम्य बहिर्विषयग्रहणान्निवृत्त्य, मनो हृदि निरुध्य अन्तर्विषयचिन्तनादवरुध्य च आत्मनः प्राणं मूर्ध्नि भ्रुवोर्मध्ये तदुपरि च निधाय योगधारणां सद्भावनामास्थितः कुर्व्वन्, आत्मन इति पदं योगधारणामित्यनेन सम्बध्य श्रीमन्मधुसूदनो व्याचष्टे "आत्मनो योगधारणाम् आत्मविषयसमाधिरूपां धारणामास्थितः, आत्मन इति देवतादिव्यावृत्त्यर्थम्" इति । ओमिति एकाक्षरं ब्रह्म ब्रह्मवाचकं, नामनामिनोरभिन्नत्वात् ब्रह्मेत्युक्तिः, व्याहरन्नुच्चारयन् मामन्तर्यामिणमनु-

**अनन्यचेताः सततं यो मां स्मरति नित्यशः ।**
**तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥१४॥**
**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।**
**नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥१५॥**

स्मरन् चिन्तयन् ध्यायन् यो देहं त्यजन् प्रयाति स परमां प्रकृष्टां गतिं याति प्राप्नोति । "एतद्ध्येवाक्षरं ब्रह्म एतद्देवाक्षरं परम् । एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥" (कठ, १।२।१६) । इत्युक्तेरोङ्कारेणान्तर्यामिणं परमपुरुषं चिन्तयन्नेव तं गच्छति, न पुनः केवलेन तदुच्चारणेनेति पश्यताचार्य्येण परमपुरुषानुचिन्तनं विहितम् । आह च प्रश्नोपनिषदि—"यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत, स तेजसि सूर्य्ये सम्पन्नः, यथा पदोदरस्त्वचा विनिर्म्मुच्यत एवं ह वै स पाप्मना विनिर्म्मुक्तः, स सामभिरुन्नीयते ब्रह्मलोकं, स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते ।" (५।५) इति । १२।१३ ।

न हि सर्व्वेषां मरणकाले योगधारणया मरणं सम्भवति । वायुनिरोधविधुराणां न तिष्ठति तादृग्धारणासामर्थ्यम् । विशेषतश्चिराभ्यासं विना तादृशी स्मृतिर्न जातु तदोपतिष्ठते, अपिच भगवत्प्राप्तिर्नित्याभ्यासपरायणानामेव भवति, नान्यस्येत्याहाचार्य्यः अनन्यचेता इति । अनन्यचेताः नान्यविषये चेतो यस्य स अनन्यचेता यः सततं निरन्तरं नित्यशः यावज्जीवं मां स्मरति चिन्तयति, तस्य नित्ययुक्तस्य सदा समाहितस्य योगिनः, हे पार्थ, अहं सुलभः सुखेन लभ्यः । ये पुनर्वायुनिरोधविधुरतयोक्तरीत्या स्वेच्छाप्रयुक्तोत्क्रमणे न समर्था भवेयुः, तेषां किं स्यादित्यपेक्षयोक्तमेवमिति श्रीमद्गिरिमधुसूदनौ । कर्म्ममिश्रां योगमिश्रां प्रधानभूतां भक्तिमुक्त्वा पद्येऽस्मिन् केवलं भक्तिमाहेति श्रीमद्विश्वनाथबलदेवौ । १४ ।

अनन्यचिन्तेन सर्व्वनियन्तारं विचिन्त्य किं भवति तदाह । माम-

**आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्ज्जुन ।**
**मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥१६॥**

न्तर्यामिणमुपेत्य प्राप्य दुःखालयं बहुक्लेशपूर्णम्, अशाश्वतं निरन्तर-परिवर्त्तनाधीनं पुनर्जन्म प्रकृतिसम्बन्धं न आप्नुवन्ति, य एते महात्मानः परमां सर्व्वोत्कृष्टां संसिद्धिं भगवत्प्राप्तिरूपां गताः प्राप्ताः । केवल-भगवदाश्रितानाम् "एषास्य परमा गतिरेषास्य परमा सम्पदेषोऽस्य परमो लोको एषोऽस्य परम आनन्दः" (वृ, आ, ६।३।३२) इति भगवत्येव नित्यस्थितिर्भवति । १५ ।

भगवदाश्रयं विना नैकान्तिकी गतिरिति स्पष्टवाक्येनोच्यते आब्रह्मेति । हे अर्ज्जुन, आब्रह्मभुवनात् सह ब्रह्मभुवनेन लोकाः पुनरावर्त्तिनः पुनरावर्त्तनस्वभावाः पुनः पुनः परिवर्त्तनशीला नैकान्तिका इति यावत् । हे कौन्तेय, मामन्तर्यामिणन्तूपेत्य प्राप्य पुनर्जन्म रूपान्तरताप्राप्तिर्न विद्यते । "अथ हैषोऽनन्तमपारमक्षय्यं लोकं जयति यः परिणादित्यम्" (तै, ब्रा, ३।११।८) इति ब्रह्मलोकस्याक्षयत्वं प्रसज्यते, तत् कथं पुनरत्रास्य पुनरावर्त्तिषु लोकेषु गणना ? "नास्याहोरात्रे लोकमाप्नुतः" (३।११।८) इत्यत्र श्रीमत्सायन आह "ब्रह्मलोके हि नैते अहोरात्रे अत्यल्पे प्रसरतः किन्तु कल्पमात्रमेकमहः, तस्मादितरलोकेष्विव नास्य आयुः क्षीयते" इति । "आब्रह्मभुवनात्" इत्युक्तिमवलम्ब्यैव स एवमाहेति प्रतिभाति । "तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः" (वृ, आ, ८।२।१५), इत्यत्र ब्रह्मलोकाख्येषु विविधेषु लोकेषु भ्रमणं भवति, न त्वहोरात्रयुक्तेषु लोकेष्विति 'न पुनरावृत्तिः' इति वाक्येन लक्ष्यते ; अन्यथा 'आब्रह्मभुवनात्' इत्युक्तिर्नसमञ्जसा स्यात् । "स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते" (प्र, उ, ५।५) इत्यत्र पुरुषेक्षणमात्रमुक्तं न तेनैक्यम् । अतो न यावत् परमपुरुषेणैकत्वमापन्नस्य जीवस्य तस्मिन् स्थितिर्भवति, न भवति स एव परमपुरुषोऽस्य परमो लोकः । उक्ता चैषैकत्वावस्था तस्यामेवो-

पनिषदि षष्ठे प्रश्ने "स यथेमा नद्यः स्यन्दमानाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते एवमेवास्य परिद्रष्टुरिमाः षोड़श कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति, भिद्येते तासां नामरूपे, पुरुष इत्येवं प्रोच्यते, स एषोऽकलोऽमृतो भवति" (६।५) इति। अत्र 'अकलः' इति पदेन देहसम्बन्धस्यापनयः, 'अमृतः' इति पदेन मृत्युमतिक्रम्य परमपुरुषे स्थितिरुच्यते। पुरुषस्य परमपुरुषेण स्वरूपैकत्वपक्षादेकत्वेऽपि श्रीमच्छङ्करोक्तिरेवात्रादरणीया—"सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम। सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः॥" इति। यत्तु श्रीमन्माध्वाचार्य्येणोक्तं गीतातात्पर्य्यनिर्णये—"'न च जीवेश्वरैक्यं मुक्तावपि,' 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च॥' 'यो वेद निहितं गुहायां परमे व्योमन्, सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा विपश्चिता।' 'एवमानन्दमयमात्मानमुपसंक्रम्य इमाँल्लोकान् कामान्नीकामरूप्यनुसञ्चरन्.........' 'न समो ब्रह्मणा कश्चित् मुक्तावपि कथञ्चन। ततः सहस्रगुणिता श्रीस्ततः परमो हरिः॥'.........इत्यादि मोक्षानन्तरमपि भेदवचनेभ्यः। न च 'यत्र त्वस्य सर्व्वमात्मैवाभूत् तत् केन कम्पश्येत् तत् केन किं जिघ्रेत्,' 'यद्वै तं न पश्यति पश्यन् वै तन्न पश्यति,' 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं पश्येत परमम्', 'ब्रह्म वेद ब्रह्मैव भवति,' 'तत्त्वमसि,' 'अहं ब्रह्मास्मि' इति वाक्यविरोधः। संज्ञानाशो यदि भवेत् किं मुक्त्या नः स्यात्।.........'न च ज्ञेयविनाशः स्यात् आत्मनाशः कुतः पुनः।'.........'तस्मात् स्वभावज्ञानेन भिन्ना विष्णुसमोपगाः। भुञ्जते सर्व्वभोगांश्च मुक्तिरेषा न चान्यथा॥'" इति—तद्वैतेनासमञ्जसम्; 'सत्यपि भेदापगमे नाथ' इत्यादिना श्रीमच्छङ्करोऽपि तदेवाह। श्रीमन्माध्वकृतगीताभाष्यस्य टीकायां प्रमेयदीपिकायां श्रीमज्जयतीर्थेन विचारतो यत् सिद्धान्तितम्, तदपि न स्वरूपैक्यविरोधि। १६।

सहस्रयुगपर्य्यन्तमहर्यद्‌ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥१७॥
अव्यक्ताद्‌व्यक्तयः सर्व्वाः प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥१८॥
भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥१९॥

ब्रह्मलोकसहिताः सर्व्वे लोकाः कथं पुनरावर्त्तिनस्तत्कारणमाह सहस्रेति । सहस्रयुगपर्य्यन्तं सहस्राणि युगानि पर्य्यन्तमवसानं यस्याह्नस्तदहः, युगसहस्रान्तां तत्परिमाणां रात्रिं ये विदुः, ते जना अहोरात्रविदः । अतो नात्ययो ब्रह्मणो लोकः । अत्र श्रीमच्छ्रीधरोऽहोरात्रमानमित्थमाह—"युगशब्देनात्र चतुर्युगमभिप्रेतम्, 'चतुर्युगसहस्रन्तु ब्रह्मणो दिनमुच्यते' इति विष्णुपुराणोक्तेः । ब्रह्मण इति च महर्लोकादिवासिनामुपलक्षणार्थम् । तत्रायं कालगणनाप्रकारः ;—मनुष्याणां यद्वर्षं तद्देवानामहोरात्रं, तादृशैरहोरात्रैः पक्षमासादिकल्पना । द्वादशभिर्वर्षसहस्रैश्चतुर्युगं भवति, चतुर्युगसहस्रन्तु ब्रह्मणो दिनम्, तावत्प्रमाणैव रात्रिस्तादृशैरहोरात्रैः पक्षमासादिक्रमेण वर्षशतं ब्रह्मणः परमायुरिति ।" इति । १७ ।

किमनेन कालगणनेनेत्याह अव्यक्तादिति । ब्रह्मणोऽहरागमे प्रबोधकाले अव्यक्ताद्ब्रह्मणः स्वापावस्थायाः सर्व्वा व्यक्तयः स्थावरजङ्गमलक्षणाः सर्व्वाः प्रजाः प्रभवन्ति प्रादुर्भवन्ति, रात्र्यागमे ब्रह्मणः स्वापकालेऽव्यक्तसंज्ञके तत्रैव प्रलीयन्ते प्रलयं यान्ति । १८ ।

"सत्याङ्कुराणि जातानि सत्यं भूतमयं जगत्" इति प्रतिज्ञाया न जातु हानिरस्तीति प्रदर्शनाय प्रलयेऽपि तेषां स्वकारणेऽव्यक्तावस्थायां स्थितिः पुनस्ततो व्यक्तिरिति निर्णीय कृतस्य न हानिरकृतस्य च नाभ्यागमः प्रदर्श्यते, भूतग्राम इति । स एवायं भूतग्रामः भूतसमूहः

भूत्वा भूत्वा उत्पद्योत्पद्य ब्रह्मणो रात्र्यागमे अवशः स्थिरतरनियमपर-
तन्त्रः, हे पार्थ, प्रलीयते स्वकारणे लीनो भवति, ब्रह्मणोऽहरागमे प्रभ-
वति जायते। लयप्रभवयोर्विचारेण सृष्टिचिन्ता मनस्युदेति। सा पुन-
र्दुरवगम्येति स्मार्त्ती वैदिकश्च सिद्धान्तः, तद्यथा "आसीदिदं तमो-
भूतमप्रज्ञातमलक्षणम्। अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः॥" (मनु,
१अ, ५श्लो); "इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न।
योऽस्याध्यक्षः परमे व्योमन्त्सोऽङ्ग वेद यदि वा न वेद॥" (ऋक्सं,
१०म, १२९सू, ७ऋक्) इति। सृष्टितत्त्वविषये स्मृतेर्वेदस्य चाज्ञेयत्व-
प्रतिज्ञा सर्व्वथादरणीया। न ज्ञात्वनन्तशक्तेः प्रसुप्तावस्था सम्भवति,
तथा सति क्रियारहितायास्तस्या अशक्तित्वमेव प्रसज्येत। यदि न
कदापि प्रसुप्तावस्था, तदानादिशक्तेः क्रियाप्यनाद्येत्यायाति। यद्यनाद्या
तदा सृष्टिरप्यनाद्या भवति। विना स्थगितगतिमारम्भो न बुद्धौ प्रति-
भासते। नास्ति चेदारम्भस्तदा सृष्टेरपि न सम्भावनास्ति, यतः सर्ज्जनं
सूचयति क्रियारम्भमेव। एवमज्ञेयत्वापत्तेराचार्य्यप्रदर्शितो न्याय एव
सर्व्वं समादधाति। व्यक्तेः प्राक् कारणे कार्य्यस्य विलीनभावेन
स्थितिः कार्य्यस्यात्यन्तासत्तां वारयति, अथापि कार्य्यं विना यदकार-
णत्वं कारणस्य तदपि न, अन्तर्विलीनकार्य्यत्वात्। क्रियावत्तां विना
न कारणत्वं सम्भवति, अन्तर्विलीनकार्य्यत्वावस्थायां न पुनः कारणस्य
क्रियावत्ता, अतएव तस्याकरणत्वमिति चेत्, प्रणिधानाभाव एव एवं-
विधोक्तेर्हेतुः। व्यञ्जने धारणे च समानमेव क्रियावत्ता। यद्यन्तः-
कार्य्यं न स्यात् धारणं न सम्भवेत्, क्रियाविच्छेदोऽपि। अतः कार-
णात् कार्य्यस्य क्रमिकाभिव्यक्तिरेव सृष्टिः, सैवारम्भशब्दवाच्या, अना-
रम्भत्वन्तु कारणे कार्य्यस्य नित्यस्थित्यैवावधारणीयम्। ननु कारण-
ब्रह्मव्यतिरिक्तं न किञ्चिदासीदिति वेदान्तप्रतिज्ञाहानिः। न, कारणं
ब्रह्म नाशक्ति, तस्य शक्तिः कार्य्यबीजमिति कार्य्यत्वव्यपदेशः शक्तेः।
कार्य्याभिव्यक्तौ कारणस्य तस्मिन्नव्यक्तावस्थायां स्थितिः, अत उक्तमाचा
र्य्येण "मया ततमिदं सर्व्वं जगदव्यक्तमूर्त्तिना" (९।४) इति। कार्य्यस्य

परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात् सनातनः ।
यः स सर्व्वेषु भूतेषु नश्यत्सु न विनश्यति ॥२०॥
अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्त्तन्ते तद्धाम परमं मम ॥२१॥

पुनरनभिव्यक्तौ कारणमेवाद्वितीयं सदित्युच्यते । तत एव पुनः कार्य्यस्याभिव्यक्तिः, कारणस्याव्यक्तावस्थायां स्थितिः । ब्रह्मणः सर्जनशक्तेः स्वापो जागरणमिति संज्ञालङ्कारिकी ; धारणं प्रकाशनमित्येव दर्शनसम्मता सा । न ह्यनन्तशक्तेरन्तर्निहितनिखिलसामर्थ्यस्याभिव्यक्तिः सम्भवति, तथा सति कुतस्तस्या अनन्तत्वम् ? अतो धारणप्रकाशनयोर्नित्यत्वं तस्यामवश्यमभ्युपगन्तव्यम् । आलङ्कारिकरीत्या स्वापजागरणयोस्तथा नित्यत्वम् । एवं धारणप्रदेशे लयः, प्रकाशनप्रदेशे प्रभव इति तयोरपि नित्यत्वम् । लयात् प्रभवः, प्रभवाल्लय इति क्रमः स्रष्टुरिच्छातः सम्भवतीति तथोक्तिः । १९ ।

"कारणस्यात्मभूता शक्तिः शक्तेरात्मभूतं कार्य्यम्" (वे, सू, भा, २।१।१८) इति शक्तिशक्तिमतोरभिन्नत्वेऽपि भिन्नत्वेन ग्रहणं बोधसौकर्य्यार्थमिति भेदनिर्द्देशः, तस्मादव्यक्तात् प्रकृतेस्त्वन्यो विलक्षणः, अव्यक्तः इन्द्रियागोचरः, सनातनो विकारविरहितो नित्यः यो भावः सत्पदार्थः, स सर्व्वेषु भूतेषु नश्यत्सु तिरोहितेषु न विनश्यति तिरोधत्ते । तत्प्रकृताविव भूतानां तिरोधानम्, न तस्यास्ति कुत्रापि तिरोधानभूमिः, यदि स्यात् सैव परतत्त्वं भवेत् तस्याः पुनस्तिरोधानस्थानकल्पनेऽनवस्थादोषापत्तिः । २० ।

यतः शक्तेरात्मभूतं कार्य्यमतः शक्तौ विलीने कार्य्यसम्बन्धवशात् पुनः पुनः रूपान्तरतायाः सम्भावना न विलुप्यते । सनातनेऽव्यक्तेऽक्षरे पुनः स्थितौ न रूपान्तरताप्राप्तिरतस्तदेवाह्याचार्य्योऽव्यक्त इति । योऽसावव्यक्तोऽक्षर इत्युक्तः, तं परमां प्रकृष्टां गतिं प्राप्यस्थानमाहुस्तत्त्वविदः । यमक्षरं प्राप्य न निवर्त्तन्ते, तन्मम परमं धाम स्वरूपम्

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तःस्थानि भूतानि येन सर्व्वमिदं ततम् ॥२२॥
यत्र काले त्वनावृत्तिमावृत्तिञ्चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥२३॥
अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥२४॥
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते ॥२५॥

"एषोऽस्य परमो लोक" इति न्यायात् । अत्र श्रीमद्रामानुजः—"सोऽव्यक्तोऽक्षर इत्युक्तः.................प्रकृतिसंसर्गवियुक्तस्वरूपेणावस्थित आत्मेत्यर्थः । यमेवं स्वरूपेणावस्थितं प्राप्य न निवर्त्तन्ते तन्मम परमं धाम परमं नियमनस्थानम् । अचेतनप्रकृतिरेकं नियमनस्थानम्, तत्संसृष्टरूपा जीवप्रकृतिर्द्वितीयं नियमनस्थानम्, अचित्संसर्गवियुक्तं स्वरूपेणावस्थितं मुक्तस्वरूपं परमं नित्यं मम नियमनस्थानम्, तच्चापुनरावृत्तिरूपम् । अथवा प्रकाशवाची धामशब्दः । प्रकाशश्च ज्ञानमभिप्रेतम् । प्रकृतिसंसृष्टात् परिच्छिन्नज्ञानरूपात्मनोऽपरिच्छिन्नज्ञानरूपतया मुक्तस्वरूपं परं धाम" इति । २१ ।

सोऽव्यक्तोऽक्षरः पुरुषः केनोपायेन लभ्यः, केन भावेन वा ग्रहणीय इत्याह पुरुष इति । यस्य पुरुषस्य अन्तःस्थानि भूतानि, येन इदं सर्व्वं ततं व्याप्तम्, स पुरुषः पुरिशयनात् पूर्णत्वाद्वा परः निरतिशयः, अनन्यया एकान्तया भक्त्या प्रेमलक्षणया लभ्यः प्राप्यः । अखण्डसच्चिदानन्दपरमपुरुषो निखिलं प्राणिजातं विश्वञ्चात्मन्यन्तर्भूय सर्व्वं व्याप्य स्थित इत्येवं धारणया योऽनन्यमनसा तं भजते, स तं प्राप्य तस्मिन् सर्व्वाणि परिवर्त्तनान्यतीत्य नित्यं निवसतीति फलितार्थः । २२ ।

प्रयाणकाले यासौ योगधारणोक्ता तया योगी परमपुरुषं प्राप्य न

निवर्त्तते, अन्ये तु निवर्त्तन्त इत्युक्तम् । अधुना ब्राह्मणविभागनिर्दिष्टं देवलोकपितृलोकगमनकालं वर्णयन् तन्निरपेक्षत्वं योगिनां वक्तुमुपक्रमते त्रिभिः यत्रेति, अग्निरिति, धूम इति । हे भरतर्षभ, यत्र काले तु प्रयाता मृता योगिनः आवृत्तिमनावृत्तिञ्च यान्ति, तं कालं वक्ष्यामि । अग्निः, ज्योतिः, अहः, शुक्लः शुक्लपक्षः, उत्तरायणं षण्मासाः, तत्र काले प्रयाता मृता ब्रह्मविदो जनाः ब्रह्म गच्छन्ति प्राप्नुवन्ति । धूमः रात्रिः, तथा कृष्णः कृष्णपक्षः, दक्षिणायनं षण्मासाः, तत्र काले चान्द्रमसं ज्योतिः प्राप्य योगी कर्म्मानुष्ठाता निवर्त्तते पुनरावर्त्तते । अग्निर्ज्योतिर्धूमो न हि कालः, तत्कथं कालशब्दोपन्यासः ? इत्थान्तरसत्त्वेऽपि आम्रवृक्षाणां प्राधान्यात् यथाम्रवणमिति निर्द्देशस्तद्वदिति व्याख्यातारः । अहराद्यास्तत्तदभिमानिन्यो देवता इति तेषां सिद्धान्तः, अन्यथा जडानां तेषां सूक्ष्मदेहावृतजीववहनक्षमता कुतः ? वस्तुतस्तु अनन्तरोक्तेन 'शुक्लकृष्णे गती' इति पद्येन शुक्लत्वद्योतका अग्न्याद्याः, कृष्णत्वद्योतका धूमाद्या गृहीता इति तत्त्वम् । ब्राह्मणविभागे मूलमीदृग्विन्यासस्य दृश्यते—"वसन्तो ग्रीष्मो वर्षास्ते देवा ऋतवः, शरद्धेमन्तः शिशिरस्ते पितरः । य एवापूर्य्यतेऽर्द्धमासः स देवाः, योऽपक्षीयते स पितरः, अहरेव देवाः, रात्रिः पितरः । पुनरह्नः पूर्व्वाह्णो देवाः, अपराह्णः पितरः । ते वा एते ऋतवो देवाः पितरः । स यो हैवं विद्वान् देवाः पितर इति ह्वयति, आ हास्य देवा देवहूयं गच्छन्ति, आ पितरः पितृहूयम् । अवन्ति हैनं देवा देवहूये, अवन्ति पितरः पितृहूये, य एवं विद्वान् देवाः पितर इति ह्वयति । स यत्रोदगावर्त्तते, तर्ह्यग्नीह आदधीतापहतपाप्मानो देवाः । अथ पाप्मानं हतेऽमृता देवाः । नामृतत्वस्याशास्ति सर्व्वमायुरेति यस्तर्हि आधत्ते । अथ यत्र दक्षिणावर्त्तते यस्तर्हि आधत्तेऽनपहतपाप्मानः पितरः । न पाप्मानमपहते मर्त्त्याः पितरः, पुरा ह्यायुषो म्रियते यस्तर्ह्याधत्ते" (श, प, ब्रा, २।१।३।१।२।४) । इति । सूर्य्यो ज्योतिर्देवानां, चन्द्रमा ज्योतिः पितृणाम्, तद्यथा, "प्रजापतिं वै भूतान्युपासीदन्, प्रजा

**शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।**
**एकया यात्यनावृत्तिमन्ययावर्त्तते पुनः ॥ २६ ॥**

वै भूतानि, वि नो धेहि यथा जीवामेति । ततो देवा यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्योपासीदंस्तानब्रवीद्यज्ञो वोऽन्नममृतत्वम् ऊर्ग्वः सूर्य्यो वो ज्योतिरिति । अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्योपासीदंस्तानब्रवीन्मासि मासि वोऽशनꣳ स्वधा वो मनो जवो वश्चन्द्रमा वो ज्योतिरिति” (२।४।२।१।२) इति । चन्द्रमासायुज्यं वर्णितमेवं तैत्तिरीयब्राह्मणे ;—“चन्द्रमा वा अकामयत—अहोरात्रानर्द्धमासान्मासानृतून्त्संवत्सरमाप्त्वा चन्द्रमसः सायुज्यं सलोकतामाप्नोत् । अहोरात्रान् ह वा अर्द्धमासान् मासानृतून्त्संवत्सरमाप्त्वा चन्द्रमसः सायुज्यं सलोकतामाप्नोति य एतेन हविषा यजते” (३।१।६)” इति । कथमाचार्य्येण “अहः शुक्लः षण्मासा उत्तरायणं,” “रात्रिः कृष्णः षण्मासा दक्षिणायनम्” इत्येवमुक्तं न तु तत्तच्छब्दैस्तदभिमानिन्यो देवता इति, तत्कारणं दृश्यतेऽत्र ब्राह्मणे ‘अहरेव देवाः,’ ‘रात्रिः पितरः,’ ‘ते वा एते ऋतवः देवाः पितरः’ इत्यभेदनिर्द्देशात् । कालेष्वेतेषु हविरावर्त्तनेन देवलोकं पितृलोकं वा गच्छति हविरावर्त्तयितेति तत्तत्काल एवाचार्य्येण प्राधान्येन गृहीतः । तैत्तिरीये चन्द्रसायुज्यस्तुतिवर्णनेऽहोरात्रोल्लेखो दृश्यते, तदनुरूपमेव अग्निर्ज्योतिर्धूम इति । अग्निर्ज्योतिरिति तु ब्रह्मलोकस्याहोरात्रानधीनत्वप्रदर्शनार्थम्, धूम इति ज्योतिरज्योतिर्विमिश्राहोरात्रनिदर्शनार्थम् । सुतरां क्षयिष्णुत्वाक्षयिष्णुत्वे सूचयन्तौ तौ । तद्यथा—“अहोरात्रे ह वा अमुष्मिꣳल्लोके परिप्लवमाने पुरुषस्य सुकृतं क्षिणुतः । अर्व्वाचीनं वा अतोऽहोरात्रे, तयो हास्याहोरात्रे सुकृतं न क्षिणुतः ।” (श, प, ब्रा, २।३।३।११) इति । २३—२५ ।

ज्ञानाज्ञानजनितं गतिद्वयं चिरन्तनमपरिहार्य्यमिति दर्शयत्याचार्य्यः शुक्लकृष्णे इति । एते शुक्लकृष्णे शुक्ला ज्ञानप्रकाशमया कृष्णा च ज्ञानप्रकाशशून्या गती जगतः सर्व्वस्य शाश्वते नित्ये मते स्मृते । एकया

नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।
तस्मात् सर्व्वेषु कालेषु योगयुक्तो भवार्ज्जुन ॥२७॥
वेदेषु यज्ञेषु तपःसु चैव
दानेषु यत्पुण्यफलं प्रदिष्टम् ।

शुक्लया अनावृत्तिं स्वरूपावस्थितिं याति प्राप्नोति, अन्यया कृष्णया पुनः आवर्त्तते रूपान्तरतां भजते । ब्राह्मणवेदान्तानुसारिणीं द्विविधां गतिं तद्वाक्येनैव प्रदर्श्य तन्निहितं सत्यं पद्येनैतेनाचार्य्यो निबद्धवान् । अग्न्यादिकं सर्व्वं ज्योतिःप्रधानत्वात् ज्ञानस्य निदर्शनम्, धूमादिकं सर्व्वं पुनस्तमःप्रधानत्वादज्ञानताव्यञ्जकम् । ज्ञानं हि शुक्लम्, अज्ञानं हि कृष्णम् ; गतिस्तु मनुष्याणां ज्ञानेनाज्ञानेन च नियन्त्रिता भवति । ज्ञानेन परब्रह्म विदित्वा अनावृत्तिरूपा तस्मिन् स्थितिर्भवति, अज्ञानेन तु भोगकामनावशात् प्रकृतिसम्बन्धं न हातुं शक्यते जीवः, अत आवृत्तिरेव । २६ ।

तत्त्वस्यास्य व्याख्याने किं फलं तदेव विस्पष्टयति नैते इति । हे पार्थ, एते सृती शुक्लकृष्णे गती जानन् कश्चन योगी न मुह्यति, अर्च्चिरादिमार्गेण मोक्षाय गतिर्भविष्यति, धूमादिमार्गेण पुनः संसारप्राप्तिर्भविष्यतीति बुद्ध्या न मुह्यति मोहं प्राप्नोति । तस्मात् तत एव, हे अर्ज्जुन, त्वमपि सर्व्वेषु कालेषु योगयुक्तो भव अपुनरावृत्तये । श्रीमच्छङ्करो वेदान्तसूत्रभाष्ये साधूक्तम् ;—"न क्वचित् परब्रह्मविषया गतिः श्राव्यते । तद्गया गतिप्रतिषेधः श्रावितः 'न तस्य प्राणा उत्क्रामन्ति' इति । 'ब्रह्मविदाप्नोति परम्' इत्यादिषु तु सत्याप्नोतेर्गत्यर्थत्वे वर्णितेन न्यायेन देशान्तरप्राप्त्यसम्भवात् स्वरूपप्रतिपत्तिरेवमविद्याध्यारोपितनामरूपप्रपञ्चप्रविलयापेक्षयाभिधीयते ।" (वे, सू, ४अ, ३पा, १४सू,) इति । सर्व्वेषु कालेषु ज्ञानी ज्ञानफलं प्राप्नोतीति निर्णीय श्रीमद्बादरायणोऽनुसृतवानाचार्य्यं सर्व्वथैव । २७ ।

परमात्मज्ञानमाश्रित्य सर्व्वेषु कालेषूत्कृष्टां गतिं प्राप्नोति योगीति

अत्येति तत्सर्व्वमिदं विदित्वा
योगी परं स्थानमुपैति चाद्यम् ॥२८॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसंवादे तारकब्रह्मयोगो नाम अष्टमोऽध्यायः ।

निष्ठार्थं योगानुष्ठायिनं स्तौति वेदेष्विति । वेदेषु सम्यगधीतेषु, यज्ञेषु सम्यगनुष्ठितेषु, तपःसु सम्यक् चरितेषु, दानेषु च सम्यग्दत्तेषु यत् पुण्यफलं प्रदिष्टं शास्त्रपूर्व्वम्, इदं गतिकारणं विदित्वा तत्सर्व्वम् अत्येति अतिक्रामति ; योगी प्रागुक्तयोगयुक्तः परमुत्कृष्टम् आद्यं जगन्मूलभूतं स्थानं पदम् उपैति प्राप्नोति ।

अध्यायतात्पर्य्यं श्रीमद्यामुनमुनिनिर्द्दिष्टम्—"ऐश्वर्य्याक्षरयाथात्म्य भगवच्चरणार्थिनाम् । वेद्योपादेयभावानामष्टमे भेद उच्यते ॥" श्रीमच्छङ्करकृतगीतार्थसारसंग्रहे—"भक्तियोगसुखप्राप्यतत्पदार्थो निरूपितः । प्राधान्येन तदङ्गस्तु त्वंपदार्थोऽत्र गौणतः ॥" इति । २८ ।

इति श्रीमद्भगवद्गीतासमन्वयभाष्येऽष्टमोऽध्यायः

---

## नवमोऽध्यायः ।

श्रीभगवानुवाच—

इदन्तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥१॥

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्त्तुमव्ययम् ॥२॥

अस्मिन्नध्याये 'सविज्ञानं ज्ञानमुपदिश्यते' इति श्रीमच्छङ्करः, 'भक्तिरूपस्योपासनस्य स्वरूपमुच्यते' इति श्रीमद्रामानुजः, 'अत्याश्चर्य्यं भगवदैश्वर्य्यं प्रपञ्च्यते' इति श्रीमच्छ्रीधरः, 'भक्त्युद्दीपकं निजैश्वर्य्यं तस्याः प्रभावञ्चाभिधास्यति' इति श्रीमद्बलदेवः, तदनुरूपञ्च निश्चिनोति श्रीमद्विश्वनाथः, 'साक्षान्मोक्षप्राप्तये भगवत्तत्त्वस्य तद्भक्तेश्च विस्तरेण ज्ञापनाय नवमोऽध्याय आरभ्यते ; अष्टमे ध्येयब्रह्मनिरूपणेन तद्ध्याननिष्ठस्य गतिरुक्ता, नवमे तु ज्ञेयब्रह्मनिरूपणेन ज्ञाननिष्ठस्य गतिरुच्यते' इति श्रीमन्मधुसूदनः, 'ज्ञेयब्रह्मविषयं प्रश्नद्वयं किन्तद्ब्रह्म किमध्यात्मम्-मिति, तद्विवरणाय नवमोऽध्याय आरभ्यते' इति श्रीमन्नीलकण्ठः, 'सप्तमाध्यायोक्तं स्पष्टयत्यस्मिन्नध्याये' इति श्रीमन्माध्वः । वस्तुतस्तु देवयान-पितृयाणनिरपेक्षस्य भगवद्भक्तस्य मोक्षसाधनं साक्षाद्भगवज्ज्ञानमुपदि-शत्यध्यायेऽस्मिन्नाचार्य्यः तदनुक्रमत इदमिति । अनसूयवे दोषा-विष्करणशून्याय उपदेष्टर्य्याविर्भूतस्वरूपे मनुष्यबुद्ध्या दोषदृष्टिविरहि-ताय ते तुभ्यं गुह्यतमं गोप्यतमं—देहादिविविक्तात्मज्ञानं गुह्यं, भगवदैश्वर्य्यज्ञानं गुह्यतरं साक्षात्परमात्मज्ञानं गुह्यतमम्—इदं विज्ञानसहितं साक्षादनुभवसहितं ज्ञानं ब्रह्मतत्त्वविषयकं प्रवक्ष्यामि, यत् ज्ञात्वा अशुभात् संसारबन्धनात् मोक्ष्यसे । १ ।

तज्ज्ञानं स्तौति राजविद्येति । इदं ज्ञानं राजविद्या विद्यानां

राजा, ब्रह्मविद्याया विद्यान्तरेभ्यो दीप्त्यतिशयित्वाच्छ्रेष्ठत्वाच्च राजेति विशेषणम्; राजगुह्यं गुह्यानां रहस्यानां राजा, गोप्यासु विद्यास्वतिरहस्यम्; पवित्रं पावनं भगवद्दर्शनविरोधिपापसमूहभस्मीकरणसमर्थम्; उत्तमं पुनःपापप्ररोहासम्भवकारणादुत्कृष्टम्, "प्रायश्चित्तैः किञ्चिदेकमेव पापं निवर्त्तते, निवृत्तञ्च तत् स्वकारणे सूक्ष्मरूपेण तिष्ठत्येव, यतः पुनस्तत् पापमुपचिनोति पुरुषः; इदन्तु अनेकजन्मसहस्रसञ्चितानां सर्व्वेषामपि पापानां स्थूलसूक्ष्मावस्थानां तत्कारणस्य चाज्ञानस्य सद्य एवोच्छेदकम्, अतः सर्व्वोत्तमं पावनमिदमेव" इति श्रीमधुसूदनः; प्रत्यक्षावगमम् — प्रत्यक्षोऽवगमोऽवबोधोऽस्मिन् प्रत्यक्षावबोधम् अन्तःसाक्षिणेदं धर्म्यमिदमधर्म्यमिति साक्षात्प्रदर्श्यमानत्वात्। प्रत्यक्षावगमं प्रत्यक्षफलं प्रदर्श्यमानधर्म्मानुसरणाधर्म्मपरिहारजनितसुखावाप्त्या, तथाहि श्रीमधुसूदनः—"अवगम्यतेऽनेनेत्यवगमो मानम्, अवगम्यते प्राप्यत इत्यवगमः फलम्। प्रत्यक्षमवगमो मानमस्मिन्निति स्वरूपतः साक्षिप्रत्यक्षत्वम्, प्रत्यक्षोऽवगमोऽस्येति फलतः साक्षिप्रत्यक्षत्वम्, अवेदं विदितमतो नेष्टमिदानीमत्र ममाज्ञानमिति हि सार्व्वलौकिकः साक्ष्यनुभवः" इति; धर्म्यं धर्म्मादनपेतं नित्यप्रत्यक्षत्वेऽपि लौकिकानुभवसिद्धत्वेऽपि वेदवेदान्तादिप्रतिपादितधर्म्मानुरूपम्; कर्त्तुं सुसुखं सुखेन कर्त्तुं शक्यम्, कृच्छ्रसाधनाद्यनपेक्षत्वात् श्रवणमननादिव्यापारमात्रसाध्यत्वाच्च; यदल्पायाससाध्यं तदल्पकालस्थायि, तन्न, अव्ययमविनाशि मोक्षेऽपि तस्यानुवृत्तेः। राज्ञां विद्या, राज्ञां गुह्यमिति समासे क्षत्रियाद्ब्रह्मविद्याधिगतेति ध्वन्यते; श्रीमद्बलदेवस्तु—"राज्ञामिवोदारचेतसां कारुणिकानामेव दिव्यापि तृणीकुर्व्वतामियं विद्या, न तु शीघ्रं पुत्रादिलिप्सया देवानन्यसेविनां दीनचेतसां कर्म्मिणाम्। राजानो हि महारत्नादिसम्पदनिह्नुवानाः स्वमन्त्रं यथातियत्नान्निह्नुयते, तथान्यां विद्यामनिह्नुवाना महान्त एतामतियत्नान्निह्नुवीरन्" इति। २।

अश्रद्दधानाः पुरुषा धर्म्मस्यास्य परन्तप ।
अप्राप्य मां निवर्त्तन्ते मृत्युसंसारवर्त्मनि ॥३॥
मया ततमिदं सर्व्वं जगदव्यक्तमूर्त्तिना ।
मत्स्थानि सर्व्वभूतानि न चाहं तेष्ववस्थितः ॥४॥
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥५॥

'कर्त्तुं सुसुखम्' इति चेत् कथं जना नानुतिष्ठन्ति धर्म्ममेतमित्य-पेक्षयाह अश्रद्दधाना इति । अस्य—आत्मज्ञानस्येति श्रीमच्छङ्करमधु-सूदनौ, उपासनाख्यस्येति श्रीमद्रामानुजः, भक्तिसहितज्ञानलक्षणस्येति श्रीमच्छ्रीधरः, भक्तिलक्षणस्येति श्रीमद्बलदेवविश्वनाथौ—धर्म्मस्य स्वरूपे तत्फले च श्रीमच्छङ्करः, स्वरूपे, साधने, तत्फले च श्रीमन्मधुसूदनः, धर्म्मस्येति कर्म्मणि षष्ठीत्यपरे व्याख्यातारः, इमं धर्म्मम् अश्रद्दधाना दृढविश्वासेन तमगृह्णन्तः मामन्तर्यामिणमप्राप्य मृत्युसंसारवर्त्मनि मृत्यु-युक्ते संसारवर्त्मनि निवर्त्तन्ते नितरां वर्त्तन्ते परिभ्रमन्ति । ३ ।

एवं विधिनिषेधमुखेन ज्ञानं स्तुत्वा श्रोतारमभिमुखीकृत्य तदेव ज्ञानं स्वमहत्त्वद्योपकमङ्ग-ऐश्वर्य्यञ्चाह द्वाभ्यां मयेति, न चेति । अव्यक्त-मूर्त्तिनेन्द्रियागोचरस्वरूपेण स्वप्रकाशसच्चिदानन्दरूपेण मयाऽन्तर्यामि-णेदं सर्व्वं जगत् भूतभौतिकतत्कारणरूपं दृश्यजातं ततं व्याप्तम् । सर्व्वभूतानि सर्व्वाणि चराचराणि भूतानि व्यापके धारके नियामकेऽन्त-र्यामिणि मयि स्थितानि । एवं सति देहदेहिवत्सम्बन्धोऽनेन जगता तवान्तर्यामिण इत्याशङ्क्याह, न च अहमन्तर्यामी तेषु स्थितः । व्यस्तं जगदनन्ते ब्रह्मणि सर्षपकणावर्त्तिष्ठतीति तस्मिंस्तस्य स्थितिर्जातु न सम्भवति । यदधीना हि यस्य स्थितिः, तस्मिंस्तस्य स्थितिरिति वक्तव्याम्, अतः परे जगतः स्थितिर्न तु जगति तस्येति परमसिद्धान्तः ।

ननु अथ एवम्, यदि सर्व्वभूतानि त्वय्यन्तर्यामिणि स्थितानि तदा तत्संसर्गस्य परिहार्य्यः, संसर्गजनितमालिन्यमप्यनिवार्य्यमित्याशङ्कां परिहर्त्तुमाह, भूतानि कार्य्यजातानि न च मत्स्थानि, न ममान्तर्यामिणः संसर्गित्वेन स्थितानि। त्वयि स्थितेऽपि न त्वयि स्थितानीति विरुद्धं कथं सिध्यति तत्राह, मे मम ऐश्वरं योगमघटनघटनं पश्य। वस्तुतस्तु न हि निरवयवस्य चैतन्यस्य जड़वत् केनापि संश्लेषः सम्भवति, अतएव हि तस्मिन्नित्यं निर्लेपत्वम्। विना चैतन्याश्रयं पुनर्न जातु जगत् स्थातुं शक्नोति नियामकाभावात्, अतो जगतस्तस्मिन् स्थितिरपरिहार्य्या। तदेवाहाचार्य्यः—अहमन्तर्यामी भूतभृत् भूतानां धारकः, न च भूतस्थः नाहं भूतस्थः भूतसंयुक्तः, मम आत्मा—मनोमयः सङ्कल्प इति श्रीमद्रामानुजः, परं स्वरूपमिति श्रीमच्छ्रीधरः, परमार्थस्वरूपभूतः सच्चिदानन्दघन इति श्रीमन्मधुसूदनः, परमानन्दरूप इति श्रीमन्नीलकण्ठः,—चित्स्वरूपः कार्य्योन्मुखे शक्तितया प्रकाशमानः भूतभावनः भूतानां पालयिता। "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा" (७।६) इत्युक्त्या स एव जगत उत्पत्तिहेतुः प्रवेशस्थानञ्च चेत्, तदा तस्यैवोपादानं जगद्भवति। एवं सति कथं तस्य निर्लिप्तता सिध्यति ? सिध्यति मनसस्तच्चिन्तायाश्चैकत्वेऽपि भिन्नत्वदर्शनात्। एकत्वेऽपि भिन्नत्वं सिध्यति मनसश्चिन्तायाश्च दृष्टान्तेन, किन्तु यावन्मानसक्रियं चिन्तायाः स्थितेर्नित्यचैतन्यक्रियापेक्षित्वं जगतो नैकान्तनिर्लिप्ततां दर्शयति। सत्यम् ; संश्लेषसम्बन्धयोर्भिन्नत्वं बुद्धिस्थं कृत्वैवोक्तं 'भूतभावनः' इति ; न हि जातु भगवता निःसम्बन्धं जगत् क्षणमात्रमपि स्थातुं शक्नोति। भवतु, चिन्ता हि मनसोऽवरुद्धगतित्वस्य निदर्शनम्, सा कथमनन्तज्ञाने सम्भवति। दृष्टान्तमात्रमेवैतत्, न हि दृष्टान्तो दार्ष्टान्तिकेन सर्व्वांशिकत्वं भजते ; जगत्सम्पर्कीणं यज्ज्ञानं भगवति नित्यमस्ति, तदेव व्यक्ततां गतं जगदाकारेण परिणमते ; अस्माकं क्षुद्रबुद्धेर्विषयीकरणाय तज्ज्ञानं दृष्टान्तत्वेन चिन्तास्थानीयं कृतम्। चिन्तावागक्षरविन्यासैर्जगज्जीवपरमात्मसम्बन्धप्रदर्शनमपि तथैव ज्ञेयम्। ४।५।

यथाकाशस्थितो नित्यं वायुः सर्व्वत्रगो महान् ।
तथा सर्व्वाणि भूतानि मत्स्थानीत्युपधारय ॥६॥
सर्व्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥७॥
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥८॥

असङ्गेऽन्तर्यामिणि स्थितानि भूतानि ; भूतेषु न स्थितोऽपि स्थित इत्यत्र लोकबुद्धिप्रवेशार्थं दृष्टान्तमाह यथेति । यथा सर्व्वत्रगो महान् वायुः नित्यमाकाशस्थितः, तथा सर्व्वाणि भूतानि मत्स्थानीत्युपधारय विमृश्य निश्चिनु । अत्रेदमुक्तं भवति, आकाशो हि नित्यमसङ्गो निरवयवत्वात् । वायुस्तस्मिन् निवसन्नपि असंश्लेषवशाद्विना बाधया सर्व्वत्र गच्छति । स्थूलसूक्ष्मभावेन सर्व्वत्र वायोरस्तित्वसम्भावनायामप्यसीमाकाशस्यैकदेशे तस्य स्थितिः । अतोऽसंश्लिष्टयोरप्याधाराधेयभावोऽवगम्यते । असङ्गस्वभावेऽन्तर्यामिण्येवमसंश्लिष्टभावेनावस्थितानि भूतानि विचरन्ति, न तेषां गतिषु काचिद्बाधोपतिष्ठते । ६ ।

एवं भूतानां स्थितिर्भगवत्युक्त्वा सम्प्रति तेषामुत्पत्तिं प्रवेशस्थानञ्चाह सर्व्वभूतानीति । हे कौन्तेय, सर्व्वभूतानि स्थावरजङ्गमात्मकानि कल्पक्षये ब्राह्मे प्रलयकाले मामिकां मदीयां प्रकृतिं—'त्रिगुणात्मिकामपरां निकृष्टाम्' इति श्रीमच्छङ्करः, मामिकां मच्छरीरभूतां प्रकृतिं तमःशब्दवाच्यां नामरूपविभागानर्हाम्' इति श्रीमद्रामानुजः, 'त्रिगुणात्मिकायां मायायाम्' इति श्रीमच्छ्रीधरमधुसूदनविश्वनाथाः, 'प्रकृतिशक्तिके मयि' इति श्रीमद्बलदेवः—यान्ति प्रविशन्ति तस्यां सूक्ष्मरूपेण लीयन्ते ; कल्पादौ सृष्टिकाले तानि—'संस्कारात्मना स्थितानि एकतां गतानि' इति श्रीमन्नीलकण्ठः—पुनर्विसृजामि विविधरूपेण सृजामि 'प्रकृतावविभागापन्नानि विभागेन व्यनज्मि' इति श्रीमन्मधुसूदनः । ७ ।

कथं सृजति तदाह, प्रकृतिमिति । स्वां प्रकृतिं सर्व्वशक्ति-

**न च मां तानि कर्म्माणि निबध्नन्ति धनञ्जय ।**
**उदासीनवदासीनमसक्तं तेषु कर्म्मसु ॥९॥**

मवष्टभ्याधिष्ठाय प्रकृतेर्वशात् स्वभाववशादवशमस्वतन्त्रमिमं कृत्स्नं समग्रं भूतग्रामं भूतसमूहं पुनः पुनरहमन्तर्यामी विसृजामि विविधरूपेण सृजामि । 'प्रकृतेर्वशादवशम्' इत्यत्र प्राचीनकर्म्मनिमित्त-तत्तत्-स्वभाववशादस्वतन्त्रमिति व्याख्या तु परास्ता पञ्चमाध्याये पद्य एकादशे पञ्चदशे च । यत्तु श्रीमन्मधुसूदनः कथं सृष्टिरिति प्रश्नस्य मीमांसार्थमाह—"किंनिमित्ता परमेश्वरस्येयं सृष्टिः ? न पुनः स्वभोगार्था, तस्य सर्व्वसाक्षिभूतचैतन्यमात्रस्य भोक्तृत्वाभावात्, तथात्वे वा संसारित्वेनेश्वरत्वव्याघातात् ; नाप्यन्यो भोक्ता, यदर्थेयं सृष्टिः, चेतनान्तराभावात्, ईश्वरस्यैव सर्व्वत्र जीवरूपेण स्थितत्वात्, अचेतनस्याभोक्तृत्वात् ; अतएव नापवर्गार्थापि सृष्टिः, बन्धाभावादपवर्गविरोधित्वाच्चेत्याद्यनुपपत्तिः सृष्टेर्मायामयत्वं साधयन्ती नास्माकं प्रतिकूलेति न परिहर्त्तव्येत्यभिप्रेत्य मायामयत्वान्मिथ्यात्वं प्रपञ्चस्य वक्तुमारभते त्रिभिः प्रकृतिमिति । प्रकृतिं मायाख्यामनिर्व्वचनीयां स्वां स्वस्मिन् कल्पितामवष्टभ्य स्वसत्तास्फूर्त्तिभ्यां दृढीकृत्य तस्याः प्रकृतेर्मायाया वशादविद्यास्मितारागद्वेषाभिनिवेशकारणावरणविक्षेपात्मकशक्तिप्रभावाज्जायमानमिमं सर्व्वप्रमाणसन्निधापितं भूतग्राममाकाशादिभूतसमुदायमहं मायावी पुनः पुनर्विसृजामि विविधं सृजामि कल्पनामात्रेण स्वप्नदृगिव स्वप्नप्रपञ्चम्" इति,—तत्त्वाचार्य्यानभिप्रेतत्वात् परमेश्वरस्य सर्ज्जनशक्तेरवश्यस्वीकार्य्यत्वाद्दैव्या मायाया भगवज्ज्ञानत्वान्न सिद्ध्यतीति प्राक् प्रदर्शितमलमत्र पुनर्विचारेण ।८।

जगत्सृष्टौ कथं न वैषम्यादिदोषैराविद्धत्वं भगवतस्तदाह न चेति । हे धनञ्जय, तेषु सृष्ट्यादिकर्म्मस्वसक्तं स्वाभिलाषपरिपूरणानुरागविरहितमुदासीनवन्निरपेक्ष इवासीनं मां तानि कर्म्माणि च न निबध्नन्ति न मयि वैषम्यादि प्रसञ्जयन्ति । कथं न भगवति वैषम्यादिदोषा-

**मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।**
**हेतुनानेन कौन्तेय जगद्विपरिवर्त्तते ॥१०॥**

पत्तिः, विचारिता सा पञ्चमाध्याये पञ्चे पञ्चदशे । क्रियाशालित्वेऽपि कथमुदासीनत्वं भगवतस्तदेवात्र विवेच्यम् । "न कर्तृत्वं न कर्म्माणि लोकस्य सृजति प्रभुः । न कर्म्मफलसंयोगं स्वभावस्तु प्रवर्त्तते ॥" (५।१४) इत्यत्र तन्मूलमभिहितमाचार्य्येण । 'कोऽयं स्वभावः ?' इति प्रश्नमुद्भाव्य तदुत्तरे प्रोक्तमस्माभिः 'सृष्ट्यादौ स्रष्टरि विद्यमानानां सृष्टिशक्तीनामात्मनिष्ठभावः' इति । पावकस्य दाहकत्वादिशक्तिवत् सर्व्वासां सृष्टि-शक्तीनां स्वाभाविकशक्तिमत्त्वं प्रदर्शितमत्र पराशरादिवाक्येन । प्रकृतिः सर्ज्जनशक्तिर्न जातु भगवतः स्वतन्त्रा, तस्यां क्रियारूपेण यत्किञ्चाभि-व्यज्यते तत्परे समारोप्यं युक्त एव । अतएव 'स्वभावस्तु प्रवर्त्तते' इत्युक्त्या न प्राकृतिकक्रियया असम्बन्धो भगवतो वक्तुं शक्यः । प्राकृतिकक्रियासु कल्याणं विना यद्यकल्याणं विद्यत इति स्थानदृशा प्रमाणितं स्यात्, भवेत्तदा भगवति दोषसंस्रवः । यत्र च जीवकृतकर्म्मणा पापापराध उत्पद्यते, तेन च दुःखम्, तथापि कल्याणमयी प्रकृतिस्तच्च दुःखं जीवस्य कल्याणाय नियोजयति । अतः प्राकृतिकक्रियासु भगवत्सम्बन्धो न दोषाय । यदि सम्बन्ध एवास्ति, तदा कथं तस्योदासीनत्वम् ? उच्यते, न तूक्तमुदासीन इति किन्तूदासीनवदिति । उदासीन इव भासमानो न तूदासीनः । तथा भासमानतायां कारणमसक्तत्वं तस्य, सक्तो न जातु भवत्युदासीनः । कर्त्तापि सोऽकर्त्ता तत्फलभोक्तृत्वा-भावात् परार्थत्वाच्च तस्य सर्व्वासु क्रियासु । तदेव ह्यसक्तत्वम् । जीव-कर्म्मानुसारतः सृष्टिशक्तीनां नियोगात् कल्याणाय न तस्मिन् वैषम्यादि प्रसज्यते, इत्यलं पल्लवितेन । ८ ।

उदासीनवत्त्व तूदासीन इति स्पष्टं दर्शयति मयाध्यक्षेणेति । अध्य-क्षेण नियामकेन—अधिष्ठात्रेति श्रीमच्छ्रीधरः, नियन्त्रेति श्रीमन्मधुसू-दनः, प्रवर्त्तकेनेति श्रीमद्बलदेवः:— मयाध्यक्षेण मया प्रकृतिर्व्यक्तिः,

'माया त्रिगुणात्मिकाविद्यालक्षणे'ति श्रीमच्छङ्करस्तदनुवर्त्तिनश्च, सचराचरं स्थावरजङ्गमलक्षणं जगत् सूयते उत्पादयति, हे कौन्तेय, अनेन हेतुनाध्यक्षत्वेन जगत् विपरिवर्त्तते विविधावस्थां भजते। तत्त्वमुक्तं मान्त्रवर्णिकैः प्रश्नमुखेनारभ्य, यथा—"किं कारणं ब्रह्म ? कुतः स्म जाताः ? जीवाम केन ? क्व च सम्प्रतिष्ठिताः ?। अधिष्ठिताः केन सुखेतरेषु जीवामहे ? ब्रह्मविदो व्यवस्थाम ॥" (श्वे, उ, १।१) इत्येतेषां प्रश्नानां भिन्नभिन्नवादिनामुत्तराण्याह "कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्या"—चिन्त्या चिन्त्यं निरूपणीयम्। एषां कारणत्वं न सम्भवति। कथम् ? "संयोग एषां न त्वात्मभावात्" —एष्वेको न सृष्टिकार्य्ये समर्थः। एषां संयोग एव सृष्टिकारणं भवतु, तन्न सम्भवति, आत्मभावात् चेतनभावादेव संयोगः सम्भवति, स तु कालादिषु न विद्यते। पुरुषश्चेतनः स एवात्मा, तेनैषां संयोगस्तेन च नियमनमस्तु ; "आत्माप्यनीशः"—आत्मा स्वयं संयोगे नियमने वा न समर्थः, कथम् ? "सुखदुःखहेतोः"—तस्य च सुखदुःखाधीनत्वं विद्यते, अतएव स नियम्यो न नियन्ता भवितुमर्हतीति (श्वे, उ, १।२)। प्रश्नानां यथायथमुत्तरं वदति "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढ़ाम्। यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः।" (श्वे, उ, १।३) इति। स्वगुणैर्ब्रह्मपरतन्त्रैरुपाधिभिर्निगूढ़ां देवात्मशक्तिं देवस्य आत्मा च शक्तिश्च तयोरभिन्नत्वेन स्थितत्वात् 'देवात्मशक्तिम्' इत्येकवचनम्, तथा चान्यत्र "भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्व्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" (श्वे, उ, १।१२), "ज्ञाज्ञौ द्वावजावीशनीशावजा ह्येका भोक्तृभोग्यार्थयुक्ता। अनन्तश्चात्मा विश्वरूपो ह्यकर्त्ता त्रयं यदा विन्दते ब्रह्ममेतत् ॥" (श्वे, उ, १।९) इति। परापरप्रकृतियुक्तमीश्वरं ते ब्रह्मविदोऽपश्यन्, य एक ईश्वरः कालात्मयुक्तानि कालमारभ्यात्मान्तानि यानि कारणानि तैर्युक्तानि निखिलानि कारणान्यधितिष्ठति। अधारत्वन्तु स्पष्टमुक्तं तत्रैव —"एको देवः सर्व्वभूतेषु गूढ़ः सर्व्वव्यापी सर्व्वभूतान्तरात्मा। कर्म्मा-

अवजानन्ति मां मूढ़ा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥११॥

धयच: सर्व्वभूताधिवास: साक्षी चेता: केवलो निर्गुणश्च ॥" (श्वे, उ, ६।११) इति ; कर्म्माध्यक्ष: परापरप्रकृतिसम्भूतानां कर्म्मणां क्रियाणामध्यक्षो नियामक: । तथाच ऋक्संहितायां—"योऽस्याध्यक्ष: परमे व्योमन्" (१०म, १२९सू, ७ऋक्) इति । १० ।

"ईश्वर: सर्व्वभूतानां हृद्देशेऽर्ज्जुन तिष्ठति" (१८।६१), "तमेव शरणं गच्छ सर्व्वभावेन भारत" (१८।६२) इत्यनेन हृदयाधिष्ठितमन्तर्यामिणमुपास्यत्वेन निर्द्दिष्टवानाचार्य्य: । स तु लोकातीतपुरुषमधिष्ठाय विशेषभावेन मार्गमुपदिशति । तं मर्त्त्यबुद्ध्या पुनरज्ञानिनोऽवजानन्ति । कथं तथा कुर्व्वन्ति ते तदवाह अवजानन्तीति । मानुषीं तनुमाश्रितं भूतमहेश्वरं भूतानां महान्तमीश्वरं मामन्तर्यामिणं मूढ़ा अविवेकिन: परमसामान्यं भावं तत्त्वमजानन्तोऽवजानन्ति अवज्ञां कुर्व्वन्ति । "अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धय: । परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥" (७।२४) इत्यत्र यदुक्तं तदेव 'परं भावमजानन्त:' इत्यस्य पुनरुक्तत्वेनास्मिन् पद्ये परामृशति । प्रागव्यक्तभावापन्नोऽधुना मानुषीं तनुमाश्रित्य व्यक्ततां गत इति केचिन्मन्यन्ते, ते एकविधां मूढ़तां व्यञ्जन्ति । न हि परं ब्रह्म कुतश्चिदागत्य मनुष्यदेहं स्वीकृतवत्, किन्तर्हि सर्व्वत्र समभावेन तिष्ठदप्यात्मानं भक्तसन्निधौ निरन्तरमेव प्रकटयतीत्यज्ञानवशात्त न जानन्तीति मूलमस्या मूढ़ताया: । अपरे पुन: "मया ततमिदं सर्व्वं जगदव्यक्तमूर्त्तिना" (९।४) इति तत्त्वमवधारयन्तो न जातु तस्य मानवतनावाविर्भूयाव्यक्ततापरिहार: सम्भवतीत्युपदेष्टृणामुपदेशवाक्यानि मानवबुद्धिप्रसूतानि न तु परमपुरुषवक्तृकानीति मत्वा तं तद्वाक्यानि चावजानन्ति । एतदपि तेषां मूढ़त्वव्यञ्जकम् । ते पुनस्तत्त्वविदो ये नित्यविद्यमानं न त्वव्यक्ताद्व्यक्तिमापन्नमन्तर्यामिणं स्वाव्यक्तमूर्त्तिं सर्व्वदा-

मनुष्यनरस्वरूपाभ्यपरिहार्य्येव लोकातीतपुरुषे स्वज्ञानविभवमाविष्करोतीति जानन्तस्तमेव श्रद्दधते। अथ लोकातीतपुरुषे भगवद्दर्शनेन भजनीयमिति जिज्ञासायां पूजास्थानान्येकादश शास्त्रनिर्दिष्टान्यव चिन्त्यानि, तद्यथा श्रीमद्भागवते—"सूर्य्योऽग्निर्ब्राह्मणो गावो वैष्णवः खं मरुज्जलम्। भूरात्मा सर्व्वभूतानि भद्र पूजापदानि मे॥" (११स्क, ११अ, ४२श्लो) इति। कुत्र केन भावेन भगवानर्च्चनीयः तत्रैव तदाहाचार्य्यः—"सूर्य्ये तु विद्यया त्रय्या हविषाग्नौ यजेत माम्। आतिथ्येन तु विप्राग्र्य गोष्वङ्ग यवसादिना॥ वैष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्ठया। वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतैः॥ स्थण्डिले मन्त्रहृदयैर्भोगैरात्मानमात्मनि। क्षेत्रज्ञं सर्व्वभूतेषु समत्वेन यजेत माम्॥" (११स्क, ११अ, ४३—४५श्लो) इति। सर्व्वेष्वेतेषु शङ्खचक्रादियुक्तं रूपं ध्यायेदिति तत्र व्यवस्था। रूपमिदं विश्वरूपस्य महापुरुषस्य परिकल्पितम्, तद्यथा भागवते द्वादशस्कन्धे—"मायाद्यैर्नवभिस्तत्त्वैः सविकारमयो विराट्। निर्म्मितो दृश्यते यत्र सचित्के भुवनत्रयम्॥ एतद्वै पौरुषं रूपं भूः पादौ द्यौः शिरो नभः। नाभिः सूर्य्योऽक्षिणी नासे वायुः कर्णौ दिशः प्रभोः॥ प्रजापतिः प्रजननमपानो मृत्युरीशितुः। तद्बाहवो लोकपाला मनश्चन्द्रो भ्रुवौ यमः॥ लज्जो-त्तरोऽधरो लोभो दन्ता ज्योत्स्ना स्मयो भ्रमः। रोमाणि भूरुहा भूम्नो मेघाः पुरुषमूर्द्धजाः॥ यावानयं वै पुरुषो यावत्या संस्थया मितः। तावानसावपि महापुरुषो लोकसंस्थया॥ कौस्तुभव्यपदेशेन स्वात्म-ज्योतिर्बिभर्त्त्यजः। तत्प्रभा व्यापिनी साक्षात् श्रीवत्समुरसा विभुः॥ स्वमायां वनमालाख्यां नानागुणमयीं दधत्। वासश्छन्दोमयं पीतं ब्रह्मसूत्रं त्रिवृत् स्वयम्॥ बिभर्त्ति सांख्ययोगञ्च देवो मकरकुण्डले। मौलिं पदं पारमेष्ठ्यं सर्व्वलोकाभयङ्करम्॥ अव्याकृतमनन्ताख्यमासनं यदधिष्ठितः। धर्म्मज्ञानादिभिर्युक्तं सत्त्वं पद्ममिहोच्यते॥ ओजः सहो बलयुतं मुख्यतत्त्वं गदां दधत्। अपां तत्त्वं दरवरं तेजस्तत्त्वं सुदर्शनम्॥ नभोनिभं नभस्तत्त्वमसिचर्म्म तमोमयम्। कालरूपं

धनुः शार्ङ्गं तथा कर्म्ममयेषुधिम् ॥ इन्द्रियाणि शरानाहुराकूति
स्यन्दनम् । तन्मात्राण्यस्याभिव्यक्तिं मुद्रयार्थक्रियात्मताम् ॥" (१२
११अ, ५—१६श्लो) इति । किमिदं रूपमेवोपासकानां सर्व्वस्वम् ?
तथा सति नैवं तर्व्याख्येत "तवैकावयवं ध्यायेदव्युच्छिन्नेन चेत
मनो निर्व्विषयं युक्त्वा ततः किञ्चन न स्मरेत् । पदं तत्परमं वि
मनो यत्र प्रसीदति ॥" (भा, २स्क १अ, १९श्लो) इति । य
"स सर्व्वधीवृत्त्यनुभूतसर्व्व आत्मा यथा स्वप्नजनेक्षितैकः । तं
मानन्दनिधिं भजेत नान्यत्र सज्जेद्यत आत्मपातः ॥" (भा,
१अ, ३९श्लो) इति । यद्येवं तत्कथं स्थूले विश्वे चित्तधारणाय
भगवद्भाविन सर्व्वस्य ग्रहणाय, तद्यथोक्तमाचार्य्येण—"मामेव
भूतेषु बहिरन्तरपावृतम् । ईक्षेतात्मनि चात्मानं यथाखममलाश
इति सर्व्वाणि भूतानि मद्भावेन महाद्युते । सभाजयन् मन्यमानो
केवलमाश्रितः ॥ ब्राह्मणे पुल्कसे स्तेने ब्रह्मण्येऽर्के स्फुलिङ्गके । र
क्रूरके चैव समदृक् पण्डितो मतः ॥ नरेष्वभीक्ष्णं मद्भावं पुंसो भ
यतोऽचिरात् । स्पर्द्धाऽसूयातिरस्काराः साहङ्कारा वियन्ति हि ॥ वि
स्मयमानान् स्वान् दृशं व्रीड़ाञ्च दैहिकीम । प्रणमेद्दण्डवद्भूमाव
चाण्डालगोखरम ॥ यावत् सर्व्वेषु भूतेषु मद्भावो नोपजायते । त
देवमुपासीत वाङ्मनःकायवृत्तिभिः ॥ सर्व्वं ब्रह्मात्मकं तस्य विद्यय
मनीषया । परिपश्यन्नुपरमेत सर्व्वतो मुक्तसंशयः ॥" (भा, ११
२९अ, १२—१८श्लो) इति । लोकातीतं पुरुषं सर्व्वमिपरमपुरु
दर्शनार्थं कथमाचार्य्यस्य निर्ब्बन्धः ? तस्मिंश्चितत्स्वरूपस्याधिकाभिव्या
तद्यथा—"हरिर्हि कैल उर्व्वीश यन्मयं वै चराचरम् । पात्रन्त्वत्र नि
वै कविभिः पात्रवित्तमैः ॥ देवर्ष्यर्हत्सु वै सत्सु तत्र ब्रह्मात्मजादि
राजन् यदग्रपूजायां मतः पात्रतयाच्युतः ॥ जीवराशिभिराकीर्ण आ
कोशाङ्घ्रिपो महान् । तन्मूलत्वादच्युतेज्या सर्व्वजीवात्मतर्पणम् ॥ प
ण्यनेन सृष्टानि नृतिर्य्यगृषिदेवताः । शेते जीवेन रूपेण पुरेषु पु
रुषो ॥ तेष्वेषु भगवान् राजंस्तारतम्येन वर्त्तते । तस्मात् पा

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीञ्चैव प्रकृतिं मोहिनीं श्रिताः ॥१२॥

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥१३॥

पुरुषो यावानात्मा यथेयते ॥" (भा, ७स्क, १४ष, ३४—३८श्लो) इति । 'मानुषीं तनुमाश्रितम्' इत्युक्तेस्तत्र प्रकाशमानत्वमेव लक्ष्यते न तु नराकृतित्वम्, तथा सति "अव्यक्तं व्यक्तिमापन्नम्" इत्युक्त्या विरोधः स्यात् । आह च श्रीमद्भाष्य:—"मानुषीं तनुं मूढानां मानुष-वत्प्रतीताम् । उक्तञ्च मोक्षधर्म्मे—'यत्किञ्चिदिह लोके वै देहबद्धं विशाम्पते । सर्व्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः ॥ ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो विराट् । भूतान्तरात्मा वरदः सगुणो निर्गु-णोऽपि च ॥'" इति । यदत्र विशेषोऽस्ति विवेक्ष्यस्तद्द्वादशा-ध्याये । ११ ।

कथन्तेऽवजानन्ति तत्कारणमाह मोघाशा इति । मोघाशाः मोघा वृथा आशा येषां ते, मोघकर्म्माणः मोघानि निष्फलानि कर्म्माणि येषां ते, मोघज्ञानाः मोघमफलं ज्ञानं येषां ते, विचेतसो विगतविवेकास्ते राक्षसीं हिंसादिप्रचुरां तामसीम्, आसुरीं कामगर्व्वादिबहुलां राजसीं, मोहिनीं विवेकविलोपिनीं प्रकृतिं स्वभावं श्रिता आश्रिताः । भग-वन्तं परित्यज्यान्यत्र निबद्धहृदयत्वात् तेषां विवेकज्ञानप्रमोषः, आशा निष्फला, अनुष्ठानं ज्ञानञ्च श्रममात्रे पर्य्यवसितं, कामलाभहिंसादि-भिश्च राक्षसासुरभावोदयो भवति । १२ ।

के पुनः श्रद्दधाना भजन्ति तानाह महात्मानस्त्विति । हे पार्थ, महात्मानस्तु महान् प्रकृष्टः श्रवणमननादिनोन्नत आत्मा सत्त्वं येषां ते विशुद्धचित्ता दैवीं देवानां प्रकृतिम् 'अभयं सत्त्वसंशुद्धिः' इत्यादि वक्ष्य-माणां सात्त्विकीं प्रकृतिं स्वभावमाश्रिता मामन्तर्यामिणं भूतादिं

सततं कीर्त्तयन्तो मां यतन्तश्च दृढ़व्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥१४॥

सर्व्वेषां भूतानामादिं कारणम्, अव्ययं सदैकरूपं नित्यं ज्ञात्वा अनन्यमनसोऽनन्यचित्ता मामन्तर्यामिणं भजन्ति सेवन्ते । १३ ।

कथन्ते भजन्ति तदाह सततमिति । सततं नियतं मामन्तर्यामिणं कीर्त्तयन्तः कीर्त्तनं कुर्व्वन्तः स्वरूपगुणादीनि मम पुनः पुनरालोचयन्तः, दृढ़व्रताः दृढ़मचञ्चलं व्रतं नियमपालनं येषां ते, यतन्तश्च यत्नं कुर्व्वन्तः, भक्त्या मां भजनीयं नमस्यन्तः नमस्कारं कुर्व्वन्तश्च नित्ययुक्ता नियतयोगयुक्ताः समाहितचित्ताः मामुपासते सेवन्ते । श्रीमन्मधुसूदनो व्याचष्टे पद्यमिदमेवम् ;—"प्रणवजपापनिषदावर्त्तनादिभिर्मां सर्व्वोपनिषत्प्रतिपाद्यं ब्रह्मस्वरूपं कीर्त्तयन्तः, वेदान्तशास्त्राध्ययनरूपश्रवणव्यापारविषयीकुर्व्वन्त इति यावत् ; तथा यतन्तश्च गुरुसन्निधावन्यत्र वा वेदान्तविरोधितर्कानुसन्धानेनाप्रामाण्यशङ्कानास्कन्दितगुरूपदिष्टमत्स्वरूपावधारणाय यतमानाः श्रवणनिर्द्धारितार्थबाधशङ्कापनोदकतर्कानुसन्धानरूपमननपरायणा इति यावत् ; तथा दृढ़व्रताः दृढ़ानि प्रतिपक्षैश्चालयितुमशक्यानि अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहादीनि व्रतानि येषां ते शमदमादिसाधनसम्पन्ना इति यावत्…………तथा नमस्यन्तश्च मां कायवाङ्मनोभिर्नमस्कुर्व्वन्तश्च मां भगवन्तं वासुदेवं सकलकल्याणगुणनिधानमिष्टदेवतारूपेण गुरुरूपेण च स्थितम्, चकारात् ………वन्दनादिसहितं श्रवणाद्यपि बोद्धव्यम् । अर्च्चनं पादसेवनमित्यादि गुरुरूपे तस्मिन् सुकरमेव । अत्र मामिति पुनर्वचनं सगुणरूपपरामर्शार्थम्, अन्यथा वैयर्थ्यप्रसङ्गात् । तथा भक्त्या सहितयैव परेण प्रेम्णा नित्ययुक्ताः सर्व्वदा संयुक्ताः । एतेन सर्व्वसाधनपौष्कल्यं प्रतिबन्धकाभावश्च दर्शितः । तदेवं शमदमादिसाधनसम्पन्ना वेदान्तश्रवणमननपरायणाः परमेश्वरे परमगुरौ प्रेम्णा नमस्कारादिना च विगतविघ्नाः परिपूर्णसर्व्वसाधनाः सन्तो मामुपासते विजातीयप्रत्ययानन्तरि-

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥१५॥
अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम्।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥१६॥

तेन स्वजातीयप्रत्ययप्रवाहेण श्रवणमननोत्तरभाविना सन्ततं चिन्तयन्ति महात्मानः। अनेन निदिध्यासनं चरमसाधनं दर्शितम्।" इति। अत्र श्रीमन्मधुसूदनेन या पुनरुक्तिसम्भावना प्रदर्शिता, निराकृता सा श्रीमद्बलदेवेनैवं व्याचक्षाणेन ;—"[मां] कीर्त्तयन्तो मामुपासत इति मत्कीर्त्तनादिकमेव मदुपासनमिति वाक्यार्थः, अतो मामिति न पौनरुक्त्यम्" इति। १४।

कीर्त्तनवन्दनादिना भक्तानामुपासनमुक्त्वा शास्त्रार्थचिन्तकानामुपासनारीतिमाह ज्ञानयज्ञेनेति। ज्ञानयज्ञेन शास्त्रानुशीलनोद्भूतं भगवद्विषयं ज्ञानमेव यज्ञस्तेन च यजन्तः पूजयन्तोऽन्येऽपर उपासका एकत्वेनाभेदेन, पृथक्त्वेन पित्रादिसम्बन्धप्रयुक्तभेदेन, बहुधा वेदोक्तेन्द्रादयो बहुप्रकारेणावस्थिताः—"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः॥" (ऋक्सं, १म, १६४सू, ४६ऋक्) इति—विश्वतोमुखं विश्वतः सर्व्वतः मुखमाननं भक्तानुग्राहकं साम्मुख्यं यस्य तं मामन्तर्य्यामिणमुपासते। चतुर्थाध्याये ज्ञानयज्ञं (४।२८) शास्त्रार्थज्ञानत्वेन निर्णीयापि केचिद्व्याख्यातारो यदन्यविधार्थं निष्पन्नवन्तो तन्न रुचिरम्। अतस्तदर्थमुपेक्ष्य मुख्यार्थ एवात्र गृहीतः। एकत्वेन पृथक्त्वेन बहुधात्वेनोपासनं शास्त्रे दृश्यते, अतः केवलशास्त्रालोचनेन बुद्धिभेदस्यावश्यम्भावित्वात् ज्ञानयज्ञे ह्युपासनाया बहुभेदोऽवश्यम्भावी। दर्शितोऽत्राचार्य्येण स एव। वक्ष्यमाणश्लोकैस्तद्विविधोपासनासु केनोपायेन भगवल्लाभः स्यात्तदेव दर्शयिष्यत्याचार्य्यः। १५।

"ब्रह्मार्पणं ब्रह्म हविः" (४।२४) इति यज्ञोपादानि प्रतीकत्वेन

पिताहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोङ्कार ऋक् साम यजुरेव च ॥१७॥
गतिर्भर्त्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं वीजमव्ययम् ॥१८॥

यज्ञकर्त्तरि त्वहंग्रहत्वेन साधनं श्रीमताचार्य्येण विहितम् । शास्त्रोक्तो-पासनाभेदानां भगवन्नामोपयोगिताविधानायाधुना विशेषं वक्तुमुपक्रम्य प्रथममेकत्वेन कथमुपासना भवति तदाह अहमिति । अहं क्रतुर्ज्योतिष्टोमादिः, अहं यज्ञो वैश्वदेवादिः, अहं स्वधा पितृभ्यो दीयमान-मन्नम्, अहमौषधं भेषजम्, अहं मन्त्रो येन दीयते सः, अहमाज्यं हविः, अहमग्निः, अहं हुतं हवनकर्म्म । ननु कथं क्रतुप्रभृतीनाम-न्तर्यामिणैकत्वं सम्भवति, यतः केनाप्युपायेन तेषां न द्रव्यत्वं विलुप्यते, द्रव्यत्वाविलोपे चक्षुरादिभिस्तत्तद्भावेन ग्रहणमपरिहार्य्यम् । उच्यते, *तत्तद्द्रव्यशक्तीनां नान्तर्यामिणः स्वतन्त्रता, तच्छक्तीरनपेक्ष्य तेषां स्वाधी-*नसत्ताभावात् । यत्सत्तया तेषां सत्तावत्ता, तत्सत्ताया एव सत्यत्वमिति जानन् तस्यां सत्तायां चित्तस्थापने केवलोऽन्तर्याम्येव बुद्धिविषयो भवति । मन्त्रस्तु न द्रव्यं, स तु वाक्यात्मकम्, तत्कथं तस्यात्र सन्निवेश इति प्रश्नोऽकिञ्चित्करः, श्रुतिगोचरत्वादिन्द्रियग्राह्यविषयेषु वाचः परि-ग्रहः । "ब्रह्मार्पणं ब्रह्म हविः" इत्यत्र यच्छ्रीमन्माध्व आह "सर्व्वमेत-द्ब्रह्मेत्युच्यते तदधीनसत्त्वादिप्रतीतित्वान्न तु तत्स्वरूपत्वात्," तन्नु तत्र तथैव । अत्राहमित्यपरोक्षज्ञानेन त्वभेदविवक्षावशात् स्वरूपमेव ग्राह्यम्, शक्तिसन्निवेशेन यद्द्रव्यं न तु तत् । "अजस्रमुद्धरन्तं स्वम्" (यो, वा, १८।२६) इति न्यायेन तत्तद्द्रव्यादहमस्मीत्यवास्मानीकुर्व्वतामात्मानं साधकसन्निधावाविष्करोति परात्मा, तेन च साधकस्य द्रव्यज्ञानमतीत्य तत्प्रत्यक्षज्ञानमुदेतीति तत्त्वम् । १६ ।

एवमेकत्वेनोपासनाविषयमाह द्वाभ्यां पितेति, गतिरिति । अहमन्त-र्यामी अस्य जगतः स्थिरचरस्य पिता जनयिता, माता जनयित्री, धाता

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतञ्चैव मृत्युश्च सदसच्चाहमर्जुन ॥१९॥
त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।

फलविधाता, पितामहः पितुः पिता । अतः परमात्मनि जनकजननी-पालकादिदृष्ट्या साधक आत्मानं पुत्रभृत्यादित्वेन गृह्णन् भेदेन तं पश्यति । अहं वेद्यं पवित्रं पावनमित्यत्र वेद्यत्वेन पावनत्वेनात्मनो भेदः, ओङ्कारः जप्यत्वेनात्मनो भेदः, ऋक् साम यजुरिति वहिःस्थ-शास्त्रत्वेन ग्रहणादात्मनो भेदः । "शास्ता विष्णुरशेषस्य जगतो यो हृदि स्थितः । तमृते परमात्मानं जन्तुः कः केन शास्यते ॥" (वि, पु, १अं, १७अ, २०श्लो) इत्यत्र शास्त्रा भेददर्शनमित्यन्यदेव । अहं गतिः प्राप्यस्थानम्, भर्त्ता पोषणकर्त्ता, प्रभुः, साक्षी पापपुण्यद्रष्टा, निवासः वासस्थानम्, शरणं शीर्य्यते दुःखमस्मिन्निति व्युत्पत्त्या प्रपन्ना-र्त्तिहरः, सुहृत् निर्निमित्तहितकृत् हितैषी, प्रभवत्यनेनेति प्रभवः स्रष्टा, प्रलीयन्तेऽनेनेति प्रलयः संहर्त्ता, तिष्ठन्त्यस्मिन्निति स्थानमाधारः, निधीयतेऽनन्तकालभोगयोग्यमनन्तसम्पदस्मिन्निति निधानमनन्तसम्पद-धिकरणम्, अव्ययमविनाशि वीजं कारणम् । तत्तद्विशेषवशादात्मनो भेदोऽत्र बोध्यः । १७।१८ ।

बहुधोपासनविषयं विवृणोति तपामीति । हे अर्जुन, अहमन्त-र्य्याम्यादित्यरूपेण तपामि, वर्षं वृष्टिं निगृह्णामि प्रतिष्टभ्नामि, उत्सृ-जामि च प्रवर्षामि च । अमृतञ्च जीवनञ्च, मृत्युश्च मरणञ्च, सत् स्थूलं दृश्यं कार्य्यमिति श्रीमन्माध्वः, असत् सूक्ष्ममदृश्यञ्च कारणमिति श्रीमन्माध्वः, अहमन्तर्यामी । सूर्य्येन्द्रादीनां क्रतुभिर्याजनं तापवृष्टि-जीवनादिलाभाय मृत्य्वादिपरिहारायेति प्रथमन्तदुक्त्वा सदसच्छब्देन दृश्यादृश्यजगत् संगृह्य बहुधोपासनविषयमुक्तवानाचार्य्यः । १९ ।

बहुधोपासनं त्रैविध्यं सकाममिति तदेव प्रथममाह त्रैविद्या इति ।

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्व्वकम् ॥२३॥

अहं हि सर्व्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥२४॥

न खलु भगवति विद्यते किमपि वैषम्यं चेत्, तत्कथं साक्षाद्भगवदाराधने नित्यं तस्मिन् स्थितिः, अज्ञानतावशाद्देवतान्तरभजने पुनः पुनरवस्थान्तरताप्राप्तिरिति। यदि स्वस्वकर्म्मानुसारिफलभोग एव नियमः, श्रद्धादीनां फलं तेषामवश्यप्राप्यम्, तत्कथं न तैस्तेषामुत्तमा गतिर्भवति, तदाह य इति। हे कौन्तेय, येऽपि भक्ता भजनशीलाः श्रद्धयान्विताः श्रद्धायुक्ताः अन्यदेवता भजन्ते, तेऽपि मामन्तर्यामिणमेव अविधिपूर्व्वकम्—अविधिरज्ञानमिति श्रीमच्छङ्करः, मोक्षप्रापकं विधिं विनेति श्रीमच्छ्रीधरः, विधिरभेदन्द्रिस्तद्रहितमित्यादिति श्रीमन्नीलकण्ठः, मत्प्रापकं विधिं विनेति श्रीमद्विश्वनाथः—यजन्ति। यं नियममाश्रित्य भजनेन साक्षाद्भगवत्प्राप्तिस्तमनादृत्य क्षुद्रविषयकामनया देवतान्तरं भजन्ते तेऽतः क्षुद्रफललाभ एव तेषाम्। मामेव यजन्तीत्युक्त्या भगवत्तस्तेऽसीमीयदेवतान्तरं नास्तीति सूचितमाचार्य्येण। अतएवाह श्रीमच्छ्रीधरः—"त्वद्व्यतिरेकेण वस्तुतो देवतान्तरस्याभावादिन्द्रादिसेविनोऽपि त्वद्भक्ता एव" इति। वेदेषु या इन्द्रादिदेवता गीयन्ते, तासां स्वरूपतो भगवतोऽभेद एव तत्र वर्णितः, केवलं विविधाभिधानैः विधेतिहासिकघटनाभिश्च संयोगवशाद्भिन्ना देवता इति प्रतिभासनेन तद्रूपेण ग्रहणात् तुच्छफलप्रार्थनेन चाविधिपूर्व्वकत्वमाराधनायास्तासाम्। २३।

यदि भगवन्तमेव ते यजन्ति कथं तेषां न भवत्युत्तमा गतिस्तदेव स्वयमाचार्य्यः स्पष्टं कथयति अहमिति। अहमन्तर्यामी सर्व्वयज्ञानां भोक्ता च स्वीकर्त्ता च, प्रभुश्च फलदाता च। तत्त्वेन यथावत् ते तु

यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥२५॥
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥२६॥
यत् करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत् तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ॥२७॥

मामन्तर्यामिणं नाभिजानन्ति, अतस्ते च्यवन्ति अवस्थान्तरतां भजन्ति । २४ ।

अविधिविधिपूर्व्वकभजनस्य गतिप्रकारमाह यान्तीति । देवव्रता देवयजनशीला देवान् यान्ति प्राप्नुवन्ति, पितृव्रताः श्राद्धादिक्रियापराः पितॄन् यान्ति प्राप्नुवन्ति, भूतेज्याः विनायकादिपूजकाः भूतानि विनायकादीनि यान्ति प्राप्नुवन्ति, मद्याजिनो मामन्तर्यामिणं पूजयन्तो मां यान्ति प्राप्नुवन्ति । २५ ।

न च भगवतः किञ्चित्प्रयोजनमस्ति, तत्कथं पूजाग्रहणम् ? भक्तानुग्रहार्थमिति चेत्, किमत्र तद्व्यग्रहणमथवा स्वीकारमात्रम् "न ह वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ते" इति श्रीमन्मधुसूदनधृता श्रुतिः स्वीकारमात्रमेव दर्शयति, तत्स्वीकारमेवमाहाचार्य्यः पत्रमिति । यो मे मह्यं पत्रं पुष्पं फलं तोयं भक्त्या प्रयच्छति ददाति, प्रयतात्मनः शुद्धबुद्धेः निष्कपटहृदयस्य भक्त्युपहृतं तदहम् अश्नामि गृह्णामि स्वीकरोमि । शुद्धभक्ताः पुनः तस्मिन् सर्व्वमर्पयन्तो भुञ्जते । तदनन्तरपद्ये वक्ष्यते । २६ ।

कथं भक्त्या प्रदत्तं भगवान् स्वीकरोति ? भक्तानुग्रहायेत्युक्तम् । अधुना सर्व्वं तस्मिन्नर्पणमेव भक्तानां कर्त्तव्यमिति व्यपदेश्यमुपदिशति यदिति । हे कौन्तेय, यत् शास्त्रीयं लौकिकं वा कर्म्म करोषि आचरसि, यत् अदनादि अश्नासि भुङ्क्ते, यत् जुहोषि हवनं निर्व्वर्त्तयसि, यत् हिरण्यादिकं ददासि प्रयच्छसि, यत् उपवासादिकं तप-

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
सन्न्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २८॥

यदपि, तपस्यसि, तत्सर्वं मदर्पणं मय्यर्पितं यथा स्यात् तथा कुरुष्व —"आत्मनेपदेन समर्पकनिष्ठमेव समर्पणफलम्" इति श्रीमन्मधुसूदनः। लौकिकं शास्त्रीयं वा निखिलं कर्म भगवत्यर्पणं दर्शयति, न किञ्चिदपि कर्म तुच्छमस्ति। कायमनोवाग्भिर्यदेव करोति पुरुषः, तदेव सुखाय दुःखाय वा भवति तस्य। "यतः प्रवृत्तिर्भूतानां येन सर्व्वमिदं ततम्। स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥" (१८।४६) इत्युक्तरीत्या "अवश्यम्भाविनां कर्म्मणां मयि परमगुरौ समर्पणमेव मद्भजनं न तु तदर्थं पृथग्व्यापारः कश्चित् कर्त्तव्यः" इति यदस्य पद्यस्याभिप्रायस्तेन निष्पन्नं श्रीमन्मधुसूदनेन तत्सिद्धं भवति। श्रीमच्छ्रीधरनाथस्त्वस्य समर्पणव्यापारस्योत्कृष्टतमतां न स्वीकरोति, "अन्यार्थमपि कृतमपि न भगवत्यर्प्यते किन्तु भगवत्यर्पितैव क्रियते" इति युक्त्या मदर्पणमित्यस्य यदा 'मह्यं समर्पय' इत्यर्थो निष्पन्नो भवति, तदा "नारायणायेति समर्पयेत्" (भा, ११स्क, २अ, ३६श्लो) इति रीत्या कृत्वा समर्पणं भवति, 'यथा मयि समर्पितं भवति तथा कुरु' इति श्रीमद्रामानुजादिभिर्निष्पन्नं व्याख्यानं दर्शयति, यदिदं कर्म्मानुष्ठीयते तद्भगवदाज्ञापालनमिति बुद्ध्या तत्कर्म्मानुतिष्ठति भक्तः, इदमेव गीतासम्मतं कर्म्मसमर्पणम्। कायमनःप्राणादिकं सर्व्वं भगवति समर्पितैस्तैः कर्म्मसाधनं भगवत्प्रेरणयैव यदा भवति, तदा स्वतःअर्पितत्वात् तदर्पणसंज्ञां न भजते। एतत्सिद्धस्य, तत्तु साधकस्येति विशेषः। कतिषु क्रियासु सिद्धेऽपि क्रियाणामानन्त्यात् सिद्धस्यापि साधकावस्था न सर्व्वथा तिरोधत्ते। अतः कर्म्मसमर्पणव्यापारस्य न घटते पुनरनित्यत्वम्। एवं सति सिद्धस्यासिद्धस्य को वा विशेष इति न वक्तव्यम्, कतिषु क्रियासु सिद्ध समर्पणव्यापारो न प्रयत्नसाध्यस्तिष्ठति। ततो न कतिषु सिद्धत्वमकिञ्चित्करम्। २७।

एवं कर्म्मसमर्पणे यद्भवति तदेवाहाचार्य्यः शुभेति। एवं मय्यन्त-

समोऽहं सर्व्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ २९॥

यौमिचि कर्म्मसमर्पणेन शुभाशुभफलैः शुभाशुभफले इष्टानिष्टफले येषां तैः कर्म्मबन्धनैः मोक्ष्यसे विमुक्तो भविष्यसि। जीवन्नेव विमुक्तः सन् सन्न्यासयोगयुक्तात्मा सन्न्यासो भगवति कर्म्मसमर्पणं स एव योगः तेन युक्त आत्मा चित्तं यस्य स त्वं मामन्तर्यामिणमुपैष्यसि प्राप्स्यसि। भगवत्यनर्पितकर्म्मैव बन्धनकारणम्, अर्पितात्मा सन्नाज्ञापालनाय कर्म्मानुष्ठानमहंममभावाभावात् जीवन्मुक्तेर्हेतुः। ननु कुत्र योगत्रयमिलनम्? भगवत्यर्पणे भगवज्ज्ञानस्यावश्यकत्वादर्पणस्य तु भक्तिव्यापारत्वात्, न पुनर्योगत्रयस्यैकीभावो बाध्यते। अस्यैकीभावस्यैव प्राधान्यमस्मिन् शास्त्र इति पुनः पुनरुक्तम्। २८।

एवं भक्तानुग्रहशीलस्य भगवतो न वैषम्यं तदेवाह सम इति। अहमन्तर्यामी सर्व्वभूतेषु सर्व्वेषु प्राणिषु समः तुल्यः वैषम्यविहीनः, न मे मम द्वेष्योऽस्ति न प्रियोऽस्ति, ये तु मां भक्त्या भजन्ति, मयि ते, तेषु च अपि अहम्। किमिदं न वैषम्यम्? न। कथम्? 'मयि ते तेषु चाप्यहम्' इति वचनमात्मनस्तेषां भक्तिनिर्म्मलमनःपथगतत्वमेव व्यनक्ति, न तु कस्यापि परित्यागेनान्यस्य ग्रहणम्; तत्त्वमन्यथ सर्व्वगतत्वात्। विद्यमानमपि वस्तु यथा दृग्दोषात्र दृग्विषयं भवति, तथा भगवान् नित्यसन्निहितोऽप्यभक्तानां न नयनगोचरो भवतीति तेषामेव दृष्टिदोषः, न भगवतो वैषम्यम्। आह च श्रीमच्छ्रिरिः—"तेनैव भजनेनाचिन्त्यमाहात्म्येन परिशुद्धबुद्धयो मयि मत्समीपे वसन्ते मदभिव्यक्तियोग्यचित्ता भवन्ति" इति। "सर्व्वेषामविषमेऽपि मयि स्वाश्रितवात्सल्यलक्षणं वैषम्यमस्ती"ति वैष्णवसिद्धान्तो न विचारसहः। सर्व्वत्र वात्सल्ये समेऽपि तदनुभवसामर्थ्यस्य तारतम्यादनुग्रहोपलब्धेस्तारतम्यं घटते। वात्सल्यं पुनस्तदेव नियहत्वेनानुभूयते, यदा पापवासनाकृतविकारवशात् कल्याणमकल्याणमिव प्रतिभाति। युक्तमुक्तं श्रीमन्मधुसूद-

अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥३०॥
क्षिप्रं भवति धर्म्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥३१॥

नेन—"यथा हि सर्व्वत्र विद्यमानेऽपि सावित्रः प्रकाशः स्वच्छदर्पणा-दावेवाभिव्यज्यते, न त्वस्वच्छे घटादौ, तावता न दर्पणे रज्यति, न वा द्वेष्टि घटम्, एवं सर्व्वत्र समोऽपि स्वच्छे भक्तचित्तेऽभिव्यज्यमानोऽस्वच्छ चाभक्तचित्ते नाभिव्यज्यमानोऽहं न रज्यामि कुत्रचित्, न वा द्वेष्मि कश्चित् । सामग्रीमर्य्यादया जायमानस्य कार्य्यस्यापर्य्यनुयोज्यत्वात् वह्निवत् कल्पतरुवच्चावैषम्यं व्याख्येयम्" इति । २८ ।

पापीयसामपि भगवद्भजनेऽधिकारोऽस्त्यन्यथा तेषां चिरानिर्म्मोचः प्रसज्येत, भगवति च सर्व्वशक्तौ स्वकृतमर्य्यादाभङ्गश्च, यतः स्वेच्छया तान् सोऽसृजत्तेषामनुमोदनमनपेक्ष्यैव । अतएव तेषां मोक्षोपायमाहा-चार्य्यः द्वाभ्याम् अपि चेदिति, क्षिप्रमिति । सुदुराचारोऽतिविगर्हित-कर्म्मा अपि चेत् अनन्यभाक् अन्यं न भजतीत्यनन्यभाक् अनन्यभक्ति-र्देवतान्तरभजनमकुर्व्वन् मामन्तर्यामिणं भजते स साधुरेव प्रागसाधुरपि साधुरेव मन्तव्यः । कथम् ? हि यस्मात् स सम्यग्व्यवसितः, सम्यक् शोभनं व्यवसितः निश्चितः साधुनिश्चयवान् । न केवलं स शोभनमध्य-वसायं कृतवान्, क्षिप्रं स धर्म्मात्मा सदाचारनिष्ठमना भवति, शश्व-च्छान्तिं शाश्वतीमपुनरावर्त्तिनीं शान्तिमुपशमं दुराचारोपरमम्—मत्प्राप्तिविरुद्धाचारनिवृत्तिमिति श्रीमद्रामानुजः चित्तोपप्लवोपरमरूपां परमेश्वरनिष्ठामिति श्रीमच्छ्रीधरः, शश्वत् पुनः पुनरनुतप्यन् मत्स्मृति-प्रतिकूलात्तस्माच्छान्तिं निवृत्तिं नितरां गच्छतीति श्रीमद्बलदेवः, विषयभोगस्पृहानिवृत्तिमिति श्रीमन्मधुसूदनः—निगच्छति प्राप्नोति । ननु दृश्यते, कश्चिद्भजनशीलोऽपि चिराभ्यस्तपापं न हातुं शक्नोति, जीव-मात्रस्यापरन्तु तत्पापं तदुपरि स्वप्रभुत्वं विस्तृणोति । एवं सति कथं

**मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।**
**स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥३२**

सिध्यति, 'क्षिप्रं स धर्म्मात्मा भवति' इत्यादि। न हि पापं नित्यकालस्थायि; स्वविनाशस्य बीजं वक्षसि कृत्वैव तदुदेति, तद्यथा क्रोधः स्वस्यालम्बनमुन्मूलयन् स्वयं विध्वंसते, न तथा प्रेमा; स तु स्वस्यालम्बनस्य स्थायितां काङ्क्षन्ति च नित्यकालं स्थायितां लभते। यथैवं, भगवत्समुद्दिश्यानुष्ठितं किञ्चिदपि न जातु क्षयमुपगच्छति, तद्यथाजामिलस्य यौवनारम्भेऽनुष्ठितः सदाचारो भ्रंशावस्थायां तस्मिन् गूढरूपेण निवसन् विपत्काले स्वशक्तिमाविष्कुर्वन् तमनुतप्तं योगानुष्ठाने स्थिरप्रतिज्ञं कृतवान्, तेन च तस्य मोक्षलाभोऽभवत्। अत एवाह, हे कौन्तेय, विस्तृतजनसंसदि साक्षित्वेनोपस्थाय प्रतिजानीहि निश्चितां प्रतिज्ञां कुरु, मे ममान्तर्यामिणो भक्तो न प्रणश्यति, दुर्गतिं नाप्नोति। यद्यपि सर्व्वान्तर्यामिण एवेयं प्रतिज्ञा जनहृदये नित्यप्रतिष्ठिता, तथापि पापाच्छन्नहृदये तस्या अनभिव्यज्यमानत्वान्न तत्र तस्याः क्रियाकारित्वम्, अतएव ये पापाचारात् प्रतिनिवृत्ता मतिश्च लब्धवन्तः, तेषां तद्घोषणमेव निराशचित्तानामाशासञ्चारकमिति तथैव भगवन्मुखवाणीमुद्घोषयदाचार्य्यः। ३०।३१।

कुलगतदोषहीनानां दुराचाराणां सद्गतिमुक्त्वाधुना वंशपरम्परया सदोषा आत्महीना ये तेषामपि भगवदाश्रयणादुत्तमा गतिर्भवतीत्याह मामिति। हे पार्थ, येऽपि पापयोनयः पापजन्मानः निकृष्टवंशोत्पन्नाः, स्त्रियः स्त्रीप्रज्ञावत्यः न तु ब्रह्मवादिन्यः, वैश्याः कृष्यादिमात्ररताः न तु शास्त्रानुचिन्तकाः, शूद्रा नीचवृत्तिकाः शोच्या न तु दासीगर्भजनारदवत् भगवद्गुणश्रवणकीर्त्तनरताः, तेऽपि मामन्तर्यामिणं व्यपाश्रित्याश्रयत्वेन गृहीत्वा परां प्रकृष्टां गतिं यान्ति प्राप्नुवन्ति। ३२।

**किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।**
**अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥३३॥**
**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥३४॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे राजगुह्ययोगो नाम नवमोऽध्यायः ।

निकृष्टवंशजन्मानो यदि प्रकृष्टां गतिं लभन्ते किं पुनरुत्तमवंशजानामित्याह किं पुनरिति । किं पुनः पुण्याः पुण्ययोनयो भक्ता ब्राह्मणास्तथा राजर्षयो राजानश्च परां गतिं लभन्ते इति वक्तव्यम् । अतस्त्वं राजर्षिकुले जातः इममनित्यमशाश्वतमसुखं दुःखनिलयं लोकं प्राप्य मामन्तर्यामिणं वक्ष्यमाणनियममाश्रित्य भजस्व । ३३ ।

कथं भजनीयं तदाह मन्मना इति । मन्मनाः मयि मनो यस्य तव स त्वं मन्मना भव, संसारिणां मनो हि विषयनिविष्टं, तव तु मय्यन्तर्यामिणि भवतु तत्, एतेन ज्ञानयोगो भवेत्युक्तम् ; मद्भक्तो मद्भजनशीलो भव, एतेन भक्तियोगो भवेत्युक्तम् ; मद्याजी मद्यजनशीलो भव, एतेन कर्मयोगो भवेत्युक्तम् । मन्मना मद्भक्तो मद्याजीति युगपदेवैकस्मिन् सम्भवत्यतो योगत्रयैक्यं न तु पृथक्त्वेन स्थितिरिति सिद्धम् । किमनेन भविष्यति ? मत्परायणो मदेकाश्रयः सन् आत्मानं मनो युक्त्वा मामेवान्तर्यामिणमेष्यसि प्राप्स्यसि ।

नवमाध्यायार्थसंग्रहे यदुक्तमस्मदादपथाश्रयिभिस्तस्य सारार्थो निबद्धः श्रीमच्चरहरिकृतगीतार्थसारसंग्रहे यथा— "मयि स्थितं जगत्सर्वं नाहं तत्रेति चोक्तितः । अधिष्ठानस्य सत्यत्वं मिथ्यात्वं कल्पितस्य हि ॥ इत्युक्तं भगवता लोकदृष्ट्यैव तन्मतम् । स्वदृष्ट्या तु ह्यधिष्ठानं नाहमस्मीति सुस्थितम् ॥ सत्तास्फूर्त्तिप्रदत्वेन नियन्तृत्वेन संस्थितः । जीववन्नैव लिप्येत येन योगः स ऐश्वरः ॥ तमेव दर्शयामास मायाशक्ति-

विजृम्भितम्। व्याख्यानादिसंयुक्तमञ्जसा श्रुतियुक्तिभिः॥" इति। श्रीमच्छ्रीधरकृतसारसंग्रहो यथा—"निजमैश्वर्यमाश्चर्यं भक्तेश्चाद्भुतवैभवम्। नवमे राजगुह्याख्ये कृपयावोचदच्युतः॥" इति। श्रीमद्बलदेवकृतसारसंग्रहो यथा—"पात्रापात्रधिया शून्या सर्वोत्कर्षावगाहिनी। गङ्गेव भक्तिरेवेति राजगुह्यमिह स्मृता॥" इति। १४।

इति श्रीमद्भगवद्गीतासमन्वयभाष्ये नवमोऽध्यायः।

# दशमोऽध्यायः ।

श्रीभगवानुवाच—

भूय एव महाबाहो शृणु मे परमं वचः ।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥१॥

सप्तमे सङ्क्षेपतो भगवद्विभूतिरुक्ता, नवमे च "अहं क्रतुः" (९।१६) इत्यादिना। केवलं परमात्मत्वेन ग्रहणे न ज्ञानभक्त्यादेः परिपुष्टिर्भवति, अतो भगवदैश्वर्यदर्शनं स्वरूपज्ञानदृढीकरणाय भवतीति तदर्थमध्यायस्यास्यारम्भः। "सप्तमेऽध्याये भगवतस्तत्त्वं विभूतयश्च प्रकाशिता नवमे च" इति श्रीमच्छङ्करोक्तौ किमिदं तत्त्वं विभूतिश्चेत्यपेक्ष्य श्रीमता गिरिणोक्तं—"तत्त्वं सोपाधिकं निरुपाधिकञ्च, विभूतयः सविशेषनिर्विशेषप्रतिपत्त्युपयोगिन्यः" इति। "कथेदानीं येषु येषु भावेषु चिन्त्यो भगवांस्ते भावा वक्तव्याः" इत्यत्र तेनोक्तम—"वक्तव्याः सविशेषध्याने, निर्विशेषप्रतिपत्तौ शेषत्वेन" इति। श्रीमता शाण्डिल्येन "तामैश्वर्यपरां काश्यपः परत्वात्। २९।" "आत्मैकपरं बादरायणः। ३०।" "उभयपरां शाण्डिल्यः शब्दोपपत्तिभ्यः। ३१।" इत्युक्त्वा स्वीकृताप्यैश्वर्यविशिष्टपरमात्मोपासना विभूतिविषये तेनोक्तम्—"प्राणित्वान्न विभूतिषु। ५०।" इति। "वृष्णीनां वासुदेवोऽस्मि" (१०।३७) इति विभूतिषु वासुदेवस्योल्लेखः स परिच्छिन्नो ब्रह्मण आकारमात्रत्वात् स एव परब्रह्मेति प्रत्यभिज्ञानात्। वस्तुतस्तु सर्वेन ब्रह्मदर्शनसहायार्थं विभूतिकीर्त्तनम्। वृष्णिवंशावतंसवसुदेवतनयो भगवत्स्वरूपाविर्भावभूमिरिति तास्तु तस्योल्लेख इति तत्त्वम्। श्रीमद्गिरिणोद्भावितं सविशेषनिर्विशेषादितत्त्वमुपरिष्टाद्विचारणीयम्। इह स्वल्पाचार्यः प्रपन्नायार्जुनाय भगवदैश्वर्येषु तद्दर्शननिष्पत्तये भूयो वदति भूय एवेति। हे महाबाहो, प्रीयमाणाय मद्वचःश्रवणे प्रीतिं

न मे विदुः सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणाञ्च सर्व्वशः ॥२॥
यो मामजमनादिञ्च वेत्ति लोकमहेश्वरम् ।
असंमूढ़ः स मर्त्त्येषु सर्व्वपापैः प्रमुच्यते ॥३॥

प्रीयते ते तुभ्यमहमन्तर्यामी हितकाम्यया हितकाङ्क्षया यत् वक्ष्यामि, तद्भूय एव पुनरपि पूर्व्वं सङ्क्षेपत उक्तमपि, मे मम परमोत्कृष्टं वचः शृणु । पुनः पुनः कथनेन वैरस्यमुत्पद्यते, यत्र प्रीतिस्तत्र तदेव मधुरतमं प्रतीयते । १ ।

यत् पूर्व्वमुक्तं कथन्तत् पुनर्वक्तुं तवोद्यम इति जिज्ञासामुद्भाव्य ज्ञानस्यास्य सुदुर्ल्लभत्वमुखेन तदुत्तरमाह न मे इति । मे मम प्रभवं —नामरूपस्वरूपस्वभावादिकमिति श्रीमद्रामानुजः, विभूतिभिराविर्भावमिति श्रीमच्छ्रीधरमधुसूदनौ, अनादिदिव्यस्वरूपगुणविभूतिमत्तया वर्त्तनमिति श्रीमद्बलदेवः—प्रभावं शक्त्यतिशयायित्वं तस्य पारमिति शैवः सुरगणा देवगणा महर्षयो भृग्वादयो न विदुः न जानन्ति । कथम् ? अहमन्तर्यामी सर्व्वशः सर्व्वप्रकारैः देवानां महर्षीणाञ्च आदिः कारणम् । यो हि यस्यादिः स तमतीत्य वर्त्तते, अतस्तद्विषयकं ज्ञानं पूर्णं ततः समुत्पन्नस्य न सम्भवतीति स्वयमहं तज्ज्ञानं वच्मि । २ ।

तज्ज्ञानमेव मोक्षसाधनमित्याह य इति । यो जनो मामन्तर्यामिणमजं जन्मरहितम् अनादिं नित्यकालविद्यमानं लोकमहेश्वरं लोकानां महान्तमीश्वरं वेत्ति जानाति, स मर्त्त्येषु मनुष्येषु असंमूढ़ः सम्मोहविवर्ज्जितः सर्व्वैः पापैः कलुषैर्विमुच्यते मुक्तो भवति । पद्यस्यास्याभिप्रायः श्रीमद्रामानुजेनैवं निर्णीयते ;—“लोके मनुष्याणां राजा इतरमनुष्यसजातीयः केनचित् कर्म्मणा तदाधिपत्यं प्राप्तः ; तथा देवानामधिपतिरपि, तथा ब्रह्माण्डाधिपतिरपि च संसारिसजातीयः तस्यापि भुवनत्रयान्तर्गतत्वात्, ‘यो ब्रह्माणं विदधाति’ इति श्रुतेश्च ;

बुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवोऽभावो भयञ्चाभयमेव च ॥४॥
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥५॥

तथान्येऽपि ये केचन अणिमाद्यैश्वर्य्यं प्राप्तवन्तः । लोकमहेश्वरः कार्य्य-कारणावस्थाद्यचेतनात् बद्धान्मुक्ताच्च चेतनादीशितव्यात् सर्व्वस्मात् निखिलहेयप्रत्यनीकानवधिकातिशयासंख्येयकल्याणगुणैकतानतया नियन्त्रैकस्वभावतया च विसजातीयः । इतरविसजातीयतया मोहरहितो यो वेत्ति सर्व्वपापैः प्रमुच्यते" इति । श्रीमद्बलदेवः श्रीमद्रामानुजमनुसृत्य विशेषणानां सार्थकतामेवमाह ;—"अजमित्यनेन प्रधानादचिद्वर्गात् संसारिवर्गाच्च भेदः ; आद्यस्य स्वपरिणामेनान्यस्य देहजन्मना च जन्मित्वात् । अनादिमित्यनेन विशेषिते तु मुक्तचिद्वर्गाच्च भेदः तस्याजत्वमादिमदेव, देहसम्बन्धेन जन्मित्वस्य पूर्व्ववृत्तित्वात् । लोकमहेश्वरमित्यनेन नित्यमुक्तचिद्वर्गात् प्रकृतिकालाभ्याञ्च भेदः, तेषामनाद्यजत्वे सत्यपि लोकमहेश्वरत्वाभावात् । पुनरनादिमित्यनेन विशेषिते विधिरुद्राभ्याञ्च भेदः, तयोर्लोकमहेश्वरतायाः सादित्वात्, सर्व्वेश्वरेणैव तयोः सा" इति । ३ ।

सर्व्वलोकमहेश्वरात् मत्त एव रुद्रादयो जीवानामित्याह बुद्धिरिति अहिंसेति द्वाभ्याम् । बुद्धिः—अन्तःकरणस्य सूक्ष्माद्यर्थानामवबोधनसामर्थ्यम् इति श्रीमच्छङ्करः श्रीमद्बलदेव-मधुसूदन-विश्वनाथाश्च, मनसा चिदचिद्वस्तुनिरूपणसामर्थ्यमिति श्रीमद्रामानुजः, कार्य्याकार्य्यविनिश्चय इति श्रीमन्माध्वः, सारासारविवेकनैपुण्यमिति श्रीमच्छ्रीधरः ; ज्ञानम्—आत्मादिपदार्थानामवबोध इति श्रीमच्छङ्करः श्रीमन्मधुसूदनश्च, चिदचिद्वस्तुविशेषविषयो निश्चय इति श्रीमद्रामानुजः श्रीमद्बलदेवश्च, प्रतीतिरिति श्रीमन्माध्वः, आत्मानात्मविवेक इति श्रीमद्विश्वनाथः, आत्मविषयमिति श्रीमच्छ्रीधरः ; असम्मोहः—प्रत्युत्पन्नेषु बोद्धव्येषु

कृत्येषु विवेकपूर्व्विका प्रवृत्तिरिति श्रीमच्छङ्करः, पूर्व्वं दृष्टेऽनात्मन्यात्मादेर्विसजातीयशुक्तिकादिवस्तुनि सजातीयताबुद्धिनिवृत्तिरिति श्रीमद्रामानुजः, व्याकुलत्वाभाव इति श्रीमच्छ्रीधरः, व्यग्रत्वाभाव इति श्रीमद्बलदेवः, प्रत्युत्पन्नेषु बोद्धव्येषु कर्त्तव्येषु चाव्याकुलतया विवेकेन प्रवृत्तिरिति श्रीमन्मधुसूदनः ; क्षमा—आक्रुष्टस्य ताड़ितस्य वा अविकृतचित्ततेति श्रीमच्छङ्करः, मनोविकारहेतौ सत्यविकृतमनस्त्वमिति श्रीमद्रामानुजः, सहिष्णुत्वमिति श्रीमच्छ्रीधर बलदेव विश्वनाथाः, आक्रुष्टस्य वा भीतस्य वा निर्व्विकारचित्ततेति श्रीमन्मधुसूदनः ; सत्यम्—यथादृष्टस्य यथाश्रुतस्य चात्मानुभवस्य परबुद्धिसंक्रान्तये यथैवोच्यमाना वागिति श्रीमच्छङ्करः, यथादृष्टविषयं भूतहितरूपवचनं तच्च सत्यं तदनुगुणमनोवृत्तिभिरीहाभिः प्रयतमनोवृत्तिप्रकारकमिति श्रीमद्रामानुजः, यथार्थभाषणमिति श्रीमच्छ्रीधरविश्वनाथौ, यथादृष्टविषयं परहितभाषणमिति श्रीमद्बलदेवः, प्रमाणेनावबुद्धस्यार्थस्य तथैव भाषणमिति श्रीमन्मधुसूदनः ; दमः—वाह्येन्द्रियोपशमः वहिरिन्द्रियसंयमः, सर्व्ववाह्यकरणानामनर्थविषयेभ्यो नियमनमिति श्रीमद्रामानुजः, इन्द्रियनिग्रह इति श्रीमन्माध्वः ; शमः—अन्तःकरणोपशमः अन्तःकरणसंयमः, परमात्मनिष्ठेति श्रीमन्माध्वः ; सुखम्—आह्लादः अनुकूलानुभवजनितो मनसो हर्षः ; दुःखम्—सन्तापः प्रतिकूलानुभवजनितो मनसो विषादः ; भवः—उद्भवः, जन्म, सत्ता ; अभावः—तद्विपर्य्ययो मृत्युरसत्ता ; भयञ्च—त्रासश्च, आगामिदुःखदर्शनजं दुःखमिति श्रीमद्रामानुजः श्रीमद्बलदेवश्च ; अभयम्—भयनिवृत्तिः ; अहिंसा—प्राणिनामपीड़ा, परपीड़ानिवृत्तिः, परादुःखहेतुत्वमिति श्रीमद्रामानुजः ; समता—समचित्तता, आत्मनि सुहृत्सु विपक्षेषु चार्थानर्थयोः समसतित्वमिति श्रीमद्रामानुजः, रागद्वेषादिराहित्यमिति श्रीमच्छ्रीधरः ; तुष्टिः—सन्तोषः, पर्य्याप्तबुद्धिर्लाभेष्विति श्रीमच्छङ्करः, सर्व्वेषु लाभेषु तोषस्वभावत्वमिति श्रीमद्रामानुजः, अलंबुद्धिरिति श्रीमन्माध्वः, दैवलब्धेन सन्तोष इति श्रीमच्छ्रीधरः, भोगेष्वेतावताऽलमिति बुद्धिरिति

**महर्षयः सप्त पूर्व्वे चत्वारो मनवस्तथा ।**
**मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥६॥**

श्रीमन्मधुसूदनः ; तपः—इन्द्रियसंयमपूर्व्वकं शरीरपीडनमिति श्रीमच्छङ्करः, शास्त्रीयसम्भोगसङ्कोच इति श्रीमद्रामानुजः, शास्त्रीयमार्गेण कायेन्द्रियशोषणमिति श्रीमन्मधुसूदनः ; दानम्—यथाशक्ति संविभाग इति श्रीमच्छङ्करः, स्वकीयभोग्यानां परस्मै उपादानमिति श्रीमद्रामानुजः, न्यायार्ज्जितधनादेः पात्रेऽर्पणमिति श्रीमच्छ्रीधरः, स्वभोग्यस्य सत्पात्रेऽर्पणमिति श्रीमद्बलदेवः, देशकाले श्रद्धया यथाशक्त्यर्थानां सत्पात्रेऽर्पणमिति श्रीमन्मधुसूदनः ; यशः—धर्म्मनिमित्ता कीर्त्तिरिति श्रीमच्छङ्करः, गुणात्यथा प्रथेति श्रीमद्रामानुजः, सत्कीर्त्तिरिति श्रीमच्छ्रीधरः ; अयशः—तद्विपरीतम । भूतानां प्राणिनां यथोक्ता भावाः पृथग्विधाः पृथग्लक्षणा नानाविधा मत्तोऽन्तर्यामित एव भवन्ति स्वकर्म्मानुरूपेणेति श्रीमच्छङ्करः, भावाः प्रवृत्तिनिवृत्तिहेतवो वृत्तयो मत्त एव मत्सङ्कल्पायत्ता भवन्ति, मत्तोऽस्य भूतजातस्य सृष्टिस्थित्योः प्रवर्त्तयितारश्च मत्सङ्कल्पायत्तप्रवृत्तय इति श्रीमद्रामानुजः, धर्म्माधर्म्मादिसाधनवैचित्र्येण नानाविधाः इति श्रीमन्मधुसूदनः । सत्त्वरजस्तमोगुणानुसारिणः पृथग्विधा भावा इति तत्त्वम् । ४।५ ।

न केवलं भावाः किन्तर्हि तद्भावसम्भूताः प्रजातन्तुविस्तारका ऋषिमनवः समुत्पन्ना इत्याह महर्षय इति । महर्षयः सप्त भृग्वादयः, तेभ्योऽपि पूर्व्वे चत्वारो महर्षयः सनकादयः, तथा मनवः स्वायम्भुवादयश्चतुर्द्दश मद्भावा मत्सामर्थ्यापिताः मत्सङ्कल्पानुवर्त्तिन इति श्रीमद्रामानुजः, मच्चित्तनपरा मद्भावनावशादाविर्भूतमामकसामर्थ्यवशेश्वरक्रेय इति श्रीमन्मधुसूदन-बलदेवौ, मय्येव भावो मनो येषामिति श्रीमन्नीलकण्ठः, —मानसा मनसोत्पादितास्तत्स्वरूपप्रभवाः जाता उत्पन्नाः लोके येषामिमाः प्रजाः सन्ततयः । बुद्ध्यादयो भावा इत्युक्त्वा मद्भावा इति कथनात् भगवति प्रतिष्ठितेभ्यो नित्येभ्यस्तेभ्यो भावेभ्यः समुत्पन्नाः

एतां विभूतिं योगञ्च मम यो वेत्ति तत्त्वतः।
सोऽविकल्पेन योगेन युज्यते नात्र संशयः ॥७॥
अहं सर्व्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥८॥

प्रज्ञानन्तुप्रवर्त्तका इति गम्यते। अतएव तेषां केऽपि ज्ञानप्रधानाः, केऽपि तपःप्रधानाः, केऽपि क्षमाप्रधानाः, केऽपि सत्यप्रधाना इत्येवं-रूपाः। एते भावा एकस्य चित्स्वरूपस्यैव विलासाः, अतः सर्व्वे चित्स्वरूपप्रभवा एवेति तत्त्वम्। ६।

बुद्ध्याद्युपादानत्वेनैव ते ऋष्यादयो विभूतिर्भगवतस्तत्तदर्थसाधन-सामर्थ्यञ्च योगः। तस्या विभूतेस्तस्य च योगस्य ज्ञानात् विकल्प-वर्ज्जितयोगस्य प्राप्तिरित्याह एतामिति। एतां मम विभूतिम्—विस्तारमिति श्रीमच्छङ्करः, विविधा भूतिर्भवनं वैभवं सर्व्वात्मकत्व-मिति श्रीमच्छ्रीधरः, मदायत्तोत्पत्तिस्थितिप्रवृत्तिरूपामिति श्रीमद्रामा-नुजः, जगत्प्रपञ्चो मदधीनस्थितिप्रवृत्तिज्ञानैश्वर्य्यशक्तिको भवतीत्येवं पारमैश्वर्य्यलक्षणामिति श्रीमद्बलदेवः, बुद्ध्यादिमहर्ष्यादिरूपां विभूतिं विविधभावं तत्तद्रूपेणावस्थितिमिति श्रीमन्मधुसूदनः; योगञ्च—युक्ति-रात्मनो घटनमथवा योगैश्वर्य्यसामर्थ्यमिति श्रीमच्छङ्करः, ईश्वरस्य तत्तदर्थसम्पादनसामर्थ्यमिति श्रीमच्छ्रीधरः, हेयप्रत्यनीककल्याणगुणाख्य-मिति श्रीमद्रामानुजः, अनाद्यजत्वादिभिः कल्याणगुणवर्गैर्मम सम्बन्ध-श्चेति श्रीमद्बलदेवः, तत्तदर्थनिर्म्माणसामर्थ्यं पारमैश्वर्य्यमिति श्रीमन्मधु-सूदनः,—यः तत्त्वतो यथावत् वेत्ति जानाति सोऽविकल्पेन अप्रकम्प्येन योगेन—सम्यग्दर्शनस्थैर्य्यलक्षणेनेति श्रीमच्छङ्करः, मद्भक्तियोगेनेति श्रीम-द्रामानुजः श्रीमद्बलदेवश्च, सम्यग्ज्ञानस्थैर्य्यलक्षणेन समाधिनेति श्रीम-न्मधुसूदनः, मत्तत्त्वज्ञानलक्षणेनेति श्रीमद्विश्वनाथः— युज्यते युक्तो भवति। ७।

कीदृशेन योगेन युज्यत इत्युच्यते अहमिति। अहं सर्व्वान्तर्यामी

**मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।**
**कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥९॥**

सर्व्वस्य जगतः प्रभव उत्पत्तिहेतुः, सर्व्वं जगत् मत्तोऽन्तर्यामिनः प्रवर्त्तते चेष्टते क्रियावद्भवति इति मत्वा मामन्तर्यामिणं बुधाः पण्डिताः परमार्थतत्त्वज्ञाः भावसमन्विताः प्रीतियुक्ता मदनुध्यानपरायणा भजन्ते सेवन्ते । भावसमन्विता इत्यत्र भावो भावना परमार्थतत्त्वाभिनिवेशः तेन समन्विताः संयुक्ता इति श्रीमच्छङ्करव्याख्यानस्य व्याख्याने श्रीमद्गिरिराह,—प्रेमादरावभिनिवेशाख्यौ भवतस्तेन संयुक्तत्वञ्च भगवद्भजने भवति' हेतुरिति । ८ ।

कथन्ते सेवन्ते तदाह मच्चित्ता इति । मच्चित्ता मयि निविष्टमनसो मत्स्मृतिपराः मद्रूपनामगुणलीलामाधुर्य्यास्वादेष्वेव लुब्धमनस इति श्रीमद्विश्वनाथः ; मद्गतप्राणा मयि गताः प्राप्ताः प्राणाश्चक्षुरादयो येषां ते मद्गतप्राणा मय्युपसंहृतकरणा इत्यर्थः, अथवा मद्गतप्राणा मद्गतजीवना इति श्रीमच्छङ्करः, मद्गतजीविता मया विना आत्मधारणमलभमाना इति श्रीमद्रामानुजः, मां विना प्राणान् धर्त्तुमक्षमा मीना इव विनाम्भ इति श्रीमद्बलदेवः, अहमेव गतो विद्यमानो येष्विति श्रीमन्नीलकण्ठः ; परस्परं बोधयन्तः—आचार्य्येभ्यः श्रुत्वा वादकथया परस्परं भगवन्तं सब्रह्मचारिणो बोधयन्तीति श्रीमद्गिरिः, परस्परं मद्रूपगुणलावण्यादि बोधयन्त इति श्रीमद्बलदेवः, विद्वद्गोष्ठीषु परस्परमन्योन्यं श्रुतिभिर्युक्तिभिश्च मामेव बोधयन्तः तद्बुभुत्सुकथा ज्ञापयन्त इति श्रीमन्मधुसूदनः, भक्तिस्वरूपप्रकारादिकं सौहार्द्देन ज्ञापयन्त इति श्रीमद्विश्वनाथः ; मां कथयन्तश्च—कथयन्तो ज्ञानबलवीर्य्यादिधर्म्मविशिष्टं मामिति श्रीमच्छङ्करः, आगमोपपत्तिभ्यां भगवन्तमेव विशिष्टधर्म्माणं शिष्येभ्यो गुरवो व्यपदिशन्तीति श्रीमद्गिरिः, मदीयानि दिव्यानि रमणीयानि च कर्म्माणि कथयन्त इति श्रीमद्रामानुजः, मां स्वभक्तवात्सल्यनीरधिमतिविचित्रचरितं कथयन्त इति श्रीमद्बलदेवः,

**तेषां सततयुक्तानां भजतां प्रीतिपूर्व्वकम्।**
**ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥१०॥**
**तेषामेवानुकम्पार्थमहमज्ञानजं तमः।**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥११॥**

स्वशिष्येभ्यो मामेव कथयन्त उपदिशन्तश्च, मद्रूपादिव्याख्यानेनोत्कीर्त्त-नादिकं कुर्व्वन्त इति श्रीमद्विश्वनाथः, एवं स्मरणश्रवणकीर्त्तनलक्षणै-र्भजनैः सुपाणैरिवेति श्रीमद्बलदेवः, मयि चित्तार्पणं तथा बाह्यकरणा-र्पणं तथा जीवनार्पणम् एवं समानानामन्योन्यं मद्बोधनं, स्वन्यूनेभ्यश्च मदुपदेशनमित्येवंरूपं यन्मद्भजनं तेनैवेति श्रीमन्मधुसूदनः, तुष्यन्ति च परितोषमुपयान्ति च—एतावतैव लब्धसर्व्वशब्दार्था वयम् अलमन्येन लब्धव्येनेत्येवंप्रत्ययरूपसन्तोषस्तं प्राप्नुवन्ति चेति श्रीमन्मधुसूदनः, तेन सन्तोषेण च रमन्ति च रमन्ते सुखमनुभवन्ति। ९।

एवं भजतां तत्त्वज्ञानोदय आह भगवदनुग्रहेण तेषामिति। तेषां सततयुक्तानां नियतयोगयुक्तानां भगवत्येकाग्रचित्तानां प्रीतिपूर्व्वकं प्रीतिः प्रेमा तत्पूर्व्वकं भजतां सेवमानानां तं बुद्धियोगं बुद्धिः सम्य-ग्दर्शनं मत्तत्त्वविषयं तेन योगो बुद्धियोगस्तमिति श्रीमच्छङ्करः, बुद्धि-रूपं योगमुपायमिति श्रीमच्छ्रीधरः, ज्ञाननिष्ठामिति श्रीमन्नीलकण्ठः —सम्यग्दर्शनं ददामि, येन सम्यग्दर्शनेन ते मामन्तर्यामिणमुपयान्ति प्रतिपद्यन्ते। १०।

कथं बुद्धियोगेन ते भगवन्तमुपयान्तीत्याह तेषामिति। तेषां भजतामेवानुकम्पार्थमनुग्रहाय आत्मभावस्थः—आत्मनो भावोऽन्तःकर-णाशयस्तस्मिन्नेव स्थित इति श्रीमच्छङ्करः, तेषां मनोवृत्तिविषयतया स्थित इति श्रीमद्रामानुजः, बुद्धिवृत्तौ स्थित इति श्रीमच्छ्रीधरः, अर-विन्दकोषे भृङ्ग इव तद्भावे स्थित इति श्रीमद्बलदेवः, आत्माकारान्तः-करणवृत्तौ विषयत्वेन स्थित इति श्रीमन्मधुसूदनः, अन्तःकरणगृहं तत्स्थ इति श्रीमन्नीलकण्ठः—हृदि स्थितः सन् भास्वता दीप्यमानेन

ज्ञानदीपेन विवेकप्रत्ययरूपेण अहमन्तर्यामी अज्ञानजं तमः मोहान्धकारं नाशयामि। एवं व्याख्यातवान् ज्ञानदीपं श्रीमच्छङ्करः—"भक्तिप्रसादस्नेहाभिषिक्तेन मद्भावनाभिनिवेशवातेरितेन ब्रह्मचर्य्यादिसाधनसंस्कारवत्प्रज्ञावर्त्तिनापि विरक्तान्तःकरणाधारेण विषयव्यावृत्तचित्तरागद्वेषाकलुषितनिवातापवरकस्थेन नित्यप्रवृत्तैकाग्रध्यानजनितसम्यग्दर्शनभास्वता ज्ञानदीपेन" इति। साधने प्रवृत्तानां पूर्व्वसंस्कारवशात् कर्म्म कुर्व्वतां न जातु कृतार्थता स्यात् चेद्भगवदनुग्रहस्तेषामुपयोगीनि साधनान्यन्तर्ग्याविष्कुर्य्यात्। तदाविष्कृतानि च तान्यनुसृत्य सत्वरं कृतकृत्यतामुपयन्ति ते। एवं यावज्जीवं भगवतान्तःप्रकाशितेन श्रीनालोकेनोत्तरोत्तरोर्द्धभूमावारोहन्ति ते। तदालोकानुसरणीनाप्रमादित्वात् विच्युतिसम्भावना निरोधन्ते, भगवति च नित्यं स्थितिर्भवति। अयमालोको ज्ञानदीपत्वेनात्र प्रेरणात्वेनच्, तद्यथा—"तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्॥" (ऋक्सं ३म, ६२सू, १०ऋक्) इति। भक्तियामितहृदये त्वियं प्रेरणा भगवद्वाणीत्वेनात्मानमाविष्करोति, तद्यथा श्रीमन्नारदवर्णितस्ववृत्तान्ते—"तस्मिन्निर्मनुजेऽरण्ये पिप्पलोपस्थ आश्रितः। आत्मनात्मानमात्मस्थं यथाश्रुतमचिन्तयम्॥ ध्यायतश्चरणाम्भोजं भावनिर्जितचेतसा। औत्कण्ठ्याश्रुकलाक्षस्य हृद्यासीन्मे शनैर्हरिः॥ प्रेमातिभरनिर्भिन्नपुलकाङ्गोऽतिनिर्वृतः। आनन्दसंप्लवे लीनो नापश्यमुभयं मुने॥ रूपं भगवतो यत्तन्मनः कान्तं शुचापहम्। अपश्यन् सहसोत्तस्थे वैक्लव्याद्दुर्मना इव॥ दिदृक्षुस्तदहं भूयः प्रणिधाय मनो हृदि वीक्ष्यमाणोऽपि नापश्यमवितृप्त इवातुरः॥ एवं यतन्तं विजने मामाहागोचरो गिराम्। गम्भीरश्लक्ष्णया वाचा शुचः प्रशमयन्निव॥ हन्तास्मिन् जन्मनि भवान् मां द्रष्टुमिहार्हति। अविपक्वकषायाणां दुर्दर्शोऽहं कुयोगिनाम्॥ सकृद्यद् दर्शितं रूपमेतत् कामाय तेऽनघ। मत्कामः शनकैः साधुः सर्व्वान् मुञ्चति हृच्छयान्॥ सत्सेवया दीर्घया ते जाता मयि दृढ़ा मतिः। हित्वाऽवद्यमिमं लोकं गन्ता मज्जनता-

अर्ज्जुन उवाच—

परं ब्रह्म परं धाम पवित्रं परमं भवान्।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥१२॥
आहुस्त्वामृषयः सर्व्वे देवर्षिर्नारदस्तथा।
असितो देवलो व्यासः स्वयञ्चैव ब्रवीषि मे ॥१३॥

ह्यसि ॥ मतिर्मयि निबद्धेयं न विपद्येत कर्हिचित्। प्रजासर्गनिरोधेऽपि स्मृतिश्च मदनुग्रहात् ॥ एतावदुक्त्वोपरराम तन्महद्भूतं नभोलिङ्गमलिङ्गमीश्वरम्। अहञ्च तस्मै महतां महीयसे शीर्ष्णाऽवनामं विदधेऽनुकम्पितः ॥ नामान्यनन्तस्य हतत्रपः पठन् गुह्यानि भद्राणि कृतानि च स्मरन्। गां पर्य्यटंस्तुष्टमना गतस्पृहः कालं प्रतीक्षन् विमदो विमत्सरः ॥" (भा, १स्क, ६अ, १६—२७श्लो) इति। ११।

एवं विभूतिं योगञ्च श्रुत्वाचार्य्यस्याविर्भूतस्वरूपत्वमनुभूयार्ज्जुन आह, परमिति आहुरिति। भवान् परं ब्रह्म परमात्मा, परं धाम प्रकाश आश्रयो वा, पवित्रं पावनं परमं प्रकृष्टम्। सर्व्वे ऋषयः देवर्षिर्नारदः, तथा असितो देवलो व्यासः त्वां पुरुषं, शाश्वतं सदैकरूपं, दिव्यं निखिलप्रपञ्चातीतम्, आदिदेवं देवानामादिभूतं स्वप्रकाशमादिकारणम्, अजं जन्मरहितम्, विभुं व्यापकं सर्व्वगतम्, आहुः। स्वयञ्च मे मह्यं त्वं ब्रवीषि,—"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च" (७।४) इत्यारभ्य "अहं सर्व्वस्य प्रभवो मत्तः सर्व्वं प्रवर्त्तते" (१०।८) इत्यन्तेन। पूर्व्वप्रतिपत्तिं विना न आत्माविर्भूतस्वरूपत्वं प्रतीतिविषयं भवति, अन्यथा दौत्यकार्य्ये नियुक्त आचार्य्यो बन्धनोद्यतं दुर्य्योधनं सभामध्ये यद्घोररूपमदर्शयत्, न तेनाभक्तस्य तस्य तस्मिन् विश्वासः समुत्पन्नः, प्रत्युतैन्द्रजालिकत्वेन तमग्रहीत् सः। तद्यथा—"न माया ह्यैन्द्रजालं वा कुहका वापि भीषणाः। आत्तशस्त्रस्य संग्रामे वहन्ति प्रतिगर्ज्जनाः ॥" (उ, प, १५९अ, २०श्लो); "सभामध्ये च यद्रूपं मायया कृतवानसि। तत्तथैव पुनः कृत्वा

सर्व्वमेतदृतं मन्ये यन्मां वदसि केशव ।
न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवा: ॥१४॥
स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन भूतेश देवदेव जगत्पते ॥१५॥

त्वार्जुनो मामभिद्रव ॥" (उ, प, १५८अ, ५४श्लो) इति। सौहृद्य-वशादर्ज्जुनोऽपि न नियतमाचार्य्यं स्वरूपाविर्भावं प्रत्यक्षीकृतवान्, तथापि तस्मिन् नासीदपराधकृत: कोऽपि प्रतिबन्धस्तमनुभवविषयं कर्त्तुम । १२।१३ ।

यदुक्तमाचार्य्येण तदन्तर्यामिणोक्तमिति ज्ञानाद्वदति स सर्व्वमिति। हे केशव, यत् मां वदसि, एतत् सर्व्वम् ऋतं सत्यं मन्ये। हे भगव-न्नन्तर्यामिन्, ते तव व्यक्तिमात्माविष्करणं—प्रभवमिति श्रीमच्छङ्कर:, निरुपाधिकस्वभावमिति श्रीमच्छ्रीधर:, व्यञ्जनप्रकारं प्रकाशप्रकारमिति श्रीमद्रामानुज:, परब्रह्मत्वादिगुणां श्रीमूर्त्तिमिति श्रीमद्बलदेव:, जन्मेति श्रीमद्विश्वनाथ:,—देवा दानवा: परिमितज्ञानत्वात् न हि विदु: जानन्ति । १४ ।

परिमितज्ञाना देवा दानवा न जानन्तीति सम्भवति, त्वमात्मानं न जानास्यनन्तत्वादिति वादस्तु न समीचीन इत्याह स्वयमिति। हे पुरुषोत्तम, हे भूतभावन भूतानामुत्पादयित:, हे भूतेश भूतानां नियन्त:, हे देवदेव देवानामपि दैवतम, हे जगत्पते, त्वं स्वयमेवा-त्मात्मानं वेत्थ जानासि। यद्येवं कथं सिध्यति भागवतस्येयमुक्ति:— "द्युपतय एव ते न ययुरन्तमनन्ततया त्वमपि यदन्तराण्डनिचया ननु सावरणा:। ख इव रजांसि वान्ति वयसा सह यच्छ्रुतयस्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधना: ॥" (भा, १०स्क, ८७अ, ४१श्लो) इति। व्याख्यातमिदं पद्यं श्रीमच्छ्रीधरेणैवम्—"हे भगवन्, ते अन्तं द्युपतय: स्वर्गादिलोकपतयो ब्रह्मादयो न ययुर्न प्रापु:। तत् कुत: ? यदन्तवद्वस्तु तत् किमपि त्वं न भवसि। आस्तां द्युपतयो न ययुरिति

यच्छक्तात् त्वमपि चात्मनोऽन्तं न यासि। कुतस्तर्हि सर्व्वज्ञता सर्व्वशक्तिता वा अत आह अनन्ततया अन्ताभावेन, न हि शशविषाणाज्ञाने सार्व्वज्ञ्यं तदप्राप्तिर्वा शक्तिवैभवं विहन्ति। अनन्तत्वमेवाह यदन्तरेति। यस्य तव अन्तरा मध्ये ननु अहो सावरणाः उत्तरोत्तरं दशगुणसप्तावरणयुक्ता अण्डनिचया ब्रह्माण्डसमूहा यान्ति परिभ्रमन्ति वयसा कालचक्रेण खे रजांसीव सह एकदैव न तु पर्य्यायेण। किं यस्मादेवमतः श्रुतयः त्वयि फलन्ति तात्पर्य्यवृत्त्या पर्य्यवस्यन्ति, न तु साक्षाद्दन्त्ययमेतावानिति, सगुणस्य गुणानन्त्यान्निर्गुणस्यागोचरत्वात् 'कथं तर्हि पदार्थे तात्पर्य्य'मिति? तत्र विधिमुखवाक्ये भवेदयं नियमः 'पदार्थस्यैव वाक्यार्थत्वम्' इति; निषेधमुखे तु नायं नियम इत्याह अतन्निरसनेनेति 'अन्यदेव तद्विदितात् अथो अविदितादपि, अन्यत्र धर्म्मादन्यत्राधर्म्मात्, अन्यत्रास्मात् कृताकृतात्,' 'अन्यत्र भूताच्च भव्याच्च यत् पश्यसि तद्वद', 'अथात आदेशो नेति नेति,' 'अस्थूलमनणु' इत्यादिप्रकारेण, लक्षणया च 'तत्त्वमसि' इत्यादयः, पर्य्यवस्यन्ति। न च वाच्यं निषेधैः शून्यमेव ज्ञाप्यत इति यतो भवन्निधनाः भवति त्वयि निधनं समाप्तिर्यासां तास्तथा। न हि निरवधिर्निषेधः सम्भवति, अतोऽवधिभूते त्वयि फलन्तीत्यर्थः" इति। नायं विरोधः;—यस्य नास्त्यन्तः, स जातु स्वस्यान्तं न जानातीति ज्ञानवत्त्वैव तस्य, नाज्ञात्वम्। न मम कोऽप्यन्तो विद्यत इति ज्ञानस्याज्ञानमेव। "इयं विसृष्टिर्यत आ बभूव यदि वा दधे यदि वा न। योऽस्याध्यक्षः परमे व्योमन्त्सो अपि वेद यदि वा न वेद॥" (ऋक्सं, १०म, १२९सू, ७ऋक्) इत्यत्र 'दधे यदि वा न', 'वेद यदि वा न वेद' इति वचनेन असतो जगतः सृजनमित्येकपक्षः, शक्त्यन्तर्निहितस्य तस्याभिव्यञ्जनमिति द्वितीयः पक्षः; आत्मशक्तेः सामर्थ्यज्ञता प्रथमः पक्षः, शक्तेरनन्ततया तस्याः सामर्थ्यस्यान्तज्ञानवर्ज्जितत्वं द्वितीयः पक्षः—भविष्यद्दार्शनिकानां चिन्ताबीजमापततीति न कोऽपि विरोधः। १५।

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥१६॥

कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन् मया ॥१७॥

विस्तरेणात्मनो योगं विभूतिञ्च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥१८॥

विनान्तर्यामिणोद्बोधनं तदभिव्यक्तिस्थानं न जात्वन्तश्चक्षुषि प्रतिभाति, अतस्त्वामेव पृच्छत्यर्जुनो वक्तुमिति । दिव्या असाधारणा अद्भुता अप्राकृता या विभूतयोऽभिव्यक्तय ऐश्वर्याणि ता अशेषेण सामस्त्येन वक्तुम् अर्हसि त्वमेव योग्योऽसि, याभिर्विभूतिभिर्विशेषप्रकाशैरात्मसाक्षात्कारविस्तरैस्त्वमिमाम् लोकान् समग्रं विश्वं व्याप्य नियम्य तिष्ठसि । १६ ।

न तद्वचनं निरर्थकं, यतो भविष्यति तद्भगवच्चिन्तने सहाय इत्याह कथमिति । हे योगिन् विचित्रसामर्थ्यशालिन्, अघटनघटनपटीयः, त्वामन्तर्यामिणं सदा सततं परिचिन्तयन्ननुसन्दधानः केषु केषु च भावेषु चेतनाचेतनात्मकेषु वस्तुषु, हे भगवन्, मया चिन्त्योऽसि ध्येयोऽसि, कथमहं विद्यां विजानीयाम् । अत्र श्रीमन्नीलकण्ठः केषु केष्विति प्रश्नस्याभिप्रायमित्थमुपावर्णयत्, "विश्वरूपदर्शनस्य दौर्लभ्यं मन्वानः कतिपयेष्वेव स्थानेषु भगवन्तं चिन्तयिष्यामि विश्वरूपदर्शनेऽधिकारसिद्ध्यर्थमित्याशयेनाह केष्विति" इति । वस्तुतस्तु विभूत्युपवर्णनेन तदभिनिविष्टचेता विश्वरूपदर्शनेऽधिकारी सोऽभवत् । किमिदं विश्वरूपं तत्त्वमेकादशे वक्ष्यते । १७ ।

ननूक्ता विभूतिस्तत्कथं पुनस्तच्छ्रवणे तव निर्बन्ध इत्याशयमुद्भाव्याह विस्तरेणेति । हे जनार्दन, हे जनानां शास्तः, आत्मनो योगं तत्तदर्थसम्पादनसामर्थ्यं कल्याणगुणरत्नैः सम्बन्धं—(१०।७) ऐश्वर्यमिति

श्रीभगवानुवाच—

हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥१९॥

श्रीमन्नीलकण्ठः,— विभूतिश्चाभिव्यक्तिमैश्वर्य्यञ्च — नियमनमिति श्रीमद्रामानुजः, ध्यानावलम्बनमिति श्रीमन्मधुसूदननीलकण्ठौ — भूयः पूर्व्वमुक्तमपि विस्तरेण कथय, अमृतं वाक्यामृतं शृण्वतो मे मम तृप्तिरलंबुद्धिर्नास्ति। १८।

एवं स्पृष्टः सन्नाहाचार्य्यो हन्तेति। हन्तेदानीमनुकम्पायां सम्बोधने च। दिव्या असाधारणा अप्राकृता या विभूतयस्तास्ते तुभ्यमिदानीं प्राधान्यतः योगोपकारित्वात् प्राधान्येन, योगस्तु सङ्क्षेपेणेति शेषः, कथयिष्यामि। व्याख्यानमिदं श्रीमन्नीलकण्ठानुमोदितम्, प्राधान्यशब्देनोत्कर्षो विवक्षित इति श्रीमद्रामानुजः। हे कुरुश्रेष्ठ, मे मम विभूतीनामानन्त्यात् विस्तरस्य नान्तोऽस्ति, अतो या या बुद्धिगोचरीभविष्यन्ति ता एव वच्मि न तु सर्व्वाः, असम्भवात्। सत्यपि "प्राणित्वाच्च विभूतिषु। ५०।" इति श्रीमच्छाण्डिल्यकृतनिषेधे विभूतीनां भगवत्तया ध्येयत्वं स्वीकृतं श्रीमद्वैष्णवाचार्य्यैः, तथा श्रीमद्विश्वनाथः "अत्र विभूतिशब्देन प्राकृताप्राकृतवस्तून्येवोच्यन्ते, तानि सर्व्वाण्येव भगवच्छक्तिसमुद्भूतत्वात् भगवद्रूपेणैव तारतम्येन ध्येयत्वेनाभिमतानि ज्ञेयानि" इति। अत्र श्रीमद्रामानुजः—"विभूतित्वं नाम नियम्यत्वं सर्व्वेषां भूतानां बुद्ध्यादयः पृथग्विधाः भावा मत्त एव भवन्तीत्युक्त्वा 'एतां विभूतिं योगञ्च मम यो वेत्ति तत्त्वत' इत्युपादानात्। तथा तत्र योगशब्दनिर्द्दिष्टं श्रेष्ठत्वादिकं विभूतिशब्दनिर्द्दिष्टं तत्प्रवर्त्यत्वमिति; पुनश्च 'अहं सर्व्वस्य प्रभवो मत्तः सर्व्वं प्रवर्त्तते। इति मत्वा भजन्ते मां बुधा भावसमन्विताः॥' इत्युक्तम्। तत्र सर्व्वभूतानां प्रवर्त्तनरूपं नियमनमात्मतयावस्थानादिसमर्थं योगशब्दनिर्द्दिष्टं सर्व्वेश्वरत्वम्" इति। वचनमिदमर्थयुक्तम्, न हि जातु नियम्यं ध्यान-

**अहमात्मा गुडाकेश सर्व्वभूताशयस्थितः ।**
**अहमादिश्च मध्यञ्च भूतानामन्त एव च ॥२०॥**

विषयं भवितुमुचितं, तन्नियन्तैव तस्य विषयः । विभूतीनां कीर्त्तनन्तु भगवदाविर्भावदर्शनसहायार्थमिति तत्त्वम् । १९ ।

प्रथमन्तावत् सङ्क्षेपेण योगमाह अहमिति । हे गुडाकेश विजितनिद्र, सर्व्वभूताशयस्थितः सर्व्वेषां भूतानामाशयेऽन्तर्हृदि स्थितः—सर्व्वभूतो यो वैराजस्तस्याशये स्थित इति समष्टिविराडन्तर्यामी, सर्व्वेषां भूतानामाशये स्थित इति व्यष्टिविराडन्तर्यामी, इति श्रीमद्विश्वनाथबलदेवौ ; सर्व्वभूताशयस्थित इत्यत्र पदविश्लेषेण सर्व्वभूताशयः सर्व्वेषां भूतानामाशय एकीभावस्थानं, स्थितः अचल इति श्रीमन्नीलकण्ठः—अत्रास्मच्छब्दार्थोऽहमन्तर्यामी आत्मा प्रत्यगात्मा । अहमन्तर्यामी आत्मत्वेन ध्येय इत्यर्थः । "न ह्यच्युतं प्रीणयतो बह्वायासोऽसुरात्मजाः । आत्मत्वात् सर्व्वभूतानां सिद्धत्वादिह सर्व्वतः ॥" (भा, ७स्क, ६अ, १९श्लो) इति प्रह्लादोक्तन्यायेनानायाससाध्यत्वं ध्यानस्यास्य । आत्मन आत्मेति भावेन ग्रहणमनायाससाध्यत्वे हेतुः । "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः । ते निचिक्युर्ब्रह्म पुराणमग्र्यम् ॥" (वृ, आ, उ, ६।४।१८) इति रीत्या आत्मन आत्मेति सिध्यति । कथमहमिति निर्द्देशः ? कर्त्तृत्वसूचनायेत्युक्तम् । आत्मैव पारमार्थिकं पारमेश्वरं रूपं पश्चाद्वक्ष्यमाणन्तु सोपाधिकं का[illegible]नकमिति श्रीमद्गिरिः । अत्र श्रीमद्रामानुज आह,—"सर्व्वेषां भूतानां मम शरीरभूतानाम् आशये हृदये अहमात्मतयावस्थितः । आत्मा हि नाम शरीरस्य सर्व्वात्मनाधारो नियन्ता स्रष्टा च । तथा वक्ष्यते 'सर्व्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च', 'ईश्वरः सर्व्वभूतानां हृद्देशेऽर्ज्जुन तिष्ठति । भ्रामयन् सर्व्वभूतानि यन्त्रारूढानि मायया ॥' इति । श्रूयते च 'यः सर्व्वेषु भूतेषु तिष्ठन् सर्व्वेभ्यो भूतेभ्योऽन्तरो, यं सर्व्वाणि भूतानि न विदुः, यस्य सर्व्वाणि भूतानि शरीरं, यः सर्व्वाणि

**आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान्।**
**मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥२१॥**

भूतान्यन्तरो यमयति एष त आत्मा अन्तर्याम्यमृतः' इति, 'स आत्मा अन्तर्याम्यमृत' इति च।" इति।

योगशब्देन श्रीमच्छ्रीनीलकण्ठः "एतां विभूतिं योगञ्च मम" (१०।७) इत्यत्र "विश्वतोमुखे भगवति मनःसमाधानम्" इत्यर्थं पर्य्यचषीत्, तच रुचिरम्; अन्तर्यामिणो भगवति चित्तसमाधानस्यासम्भवात्, ममेति पदेन च विभूतियोगशब्दयोः समानसम्बन्धवशात् सम्बन्धविच्छेदेनार्थान्तरसाधनस्यायुक्तत्वात्। स तु 'सर्व्वभूताशयः' इत्यस्य 'सर्व्वभूतानामैक्यभावस्थानम्' इत्यर्थं यदि ब्रवाम् स एव योगशब्दस्यान्तर्यामिपक्षे सुघट एव, "मयि सर्व्वमिदं प्रोतं सूत्रे मणिगणा इव" (७।७) इत्युक्तदिशा। विचित्रसामर्थ्यशालित्वमघटनघटनपटीयस्त्वं विस्पष्टयति— अहमेव भूतानामादिर्मध्यमन्तश्च उत्पत्तिस्थितिप्रलयहेतुः। आत्मत्वेन ध्यानं मुख्यं तदशक्तादैश्वर्य्यवत्त्वेन। न हि विभूतयो ध्यानविषयाः किन्तर्हि तेषु नियन्तृत्वेन परमात्मैव चिन्तनीयः। अतएवाह श्रीमच्छङ्करः—"प्रत्यगात्मा नित्यं ध्येयः, तदशक्तेन चोत्तरेषु भावेषु चिन्त्योऽहम्" इति। आह च श्रीमद्गिरिः—"सर्व्वकारणत्वेन सर्व्वज्ञत्वेन सर्व्वेश्वरत्वेन च परस्य ध्येयत्वमपेक्षितं नान्यस्य कस्यचित्कारणस्यादित्यादिषु ध्येयता।" इति। २०।

"यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्छ त्वं मम तेजोऽंशसम्भवम् ॥" (१०।४१) इत्युक्त्या भगवच्छक्तिविभवप्रकाशभूमेर्विभूतित्वसिद्धौ तत्प्रकाशाधिक्यक्रमेणैव तासां तारतम्यं मनसिकृत्य "आदित्यानामहं विष्णुः" इत्याद्यारभ्यते आचार्य्येण। "तेष्वेषु भगवान् राजंस्तारतम्येन वर्त्तते। तस्मात् पात्रं हि पुरुषो यावानात्मा यथेयते ॥" (भा, ७स्क, १४अ, ३८श्लो) इत्यत्र सुव्यक्तमेतत्। आदित्यानामिति। आदित्यानां द्वादशसंख्यकानां मध्ये विष्णुरहमन्तर्यामी। आदित्या

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥२२॥

द्वादशसंख्यकाः, यथा विष्णुधर्म्मोत्तरे—"धाता मित्रोऽर्य्यमा रुद्रो वरुणः सूर्य्य एव च । भगो विवस्वान् पूषा च सविता दशमः स्मृतः । एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते ॥" इति । सर्व्वेषामादित्यानां कथं विष्णोः प्राधान्यमिति जिज्ञासायामेतेषां वैदिकदेवतानां स्थाननिर्णयं परिचिन्त्य दृश्यते, धात्रादीनां स्थानं ह्यन्तरिक्षं ; वरुणस्य स्थानमन्तरिक्षं द्युस्थानञ्चेति निर्द्दिष्टेऽपि "अन्तरिक्षे उदकमावृणोति" इति भाष्यवचनात् अन्तरिक्षमेव तस्य प्रधानं स्थानं, तथाच सविता— "सर्व्वकर्म्मणां वृष्टिप्रदानादिना सविता अभ्यनुज्ञाता" इत्युक्तत्वात्, "सूर्य्यादिर्देवपत्न्यन्ता द्युस्थानदेवता" इति वचनात् भगोऽपि अन्तरिक्षस्थो देव एव ; सूर्य्यः, पूषा, मनुर्विवस्वदाख्यः, विष्णुः, एते द्युस्थानस्था देवाः । एषु सूर्य्यः "सर्व्वदैवोदयास्तमयौ प्रति ईर्य्यते" इति, पूषा "यदा रश्मिभिः परिपुष्टो भवति तदा पूषा" इति, मनुः "मननात् स्वाधिकारादेः" इति विष्णोर्न्यून एव । स हि "तीव्रं महारेण सर्व्वत्र व्याविशति" इति तस्य प्राधान्यम् । यज्ञनामसु पठितः विष्णुरपि "विश्वेणाप्नोति स्वगतः" इति भाष्यवचनात् न पुनः न तस्य प्राधान्यस्य कापि क्षतिः । ज्योतिषां प्रकाशकानामन्यानां मध्ये अंशुमान् चिररश्मियुक्तो रविः सूर्य्योऽहमन्तर्यामी, मरुतां सप्तसप्तकानां मध्ये मरीचिः अस्मि अहम् ; नक्षत्राणां मध्ये शशी चन्द्रमा अहम् । २१ ।

वेदानामिति । वेदानां मध्ये सामवेदोऽस्मि अहम् । यद्यपि ऋक्संहितोक्तानामृचामेव गेयत्वेन सामत्वं, तथापि तस्य निरतिशयेन चित्ताकर्षकत्वहेतोः श्रेष्ठत्वम् । देवानां मध्ये वासव इन्द्रोऽस्मि अहम् । वैदिकानां देवानां यद्यपि समत्वं परिलक्ष्यते स्वरूपसमालोचनया, तथापि लोके पुनरिन्द्रस्यास्मिन् भारते प्राधान्यमासीदित्युपनिषत्सु दृष्टि-

रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥२३॥
पुरोधसाञ्च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥२४॥
महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥२५॥

श्रोऽश्नमस्मि, यथापि तथैव। इन्द्रियाणां मध्ये मनोऽहम्। प्रेरक-त्वात् भूतानां सम्बन्धिनी चेतना चाहम्। भूतेषु चिदभिव्यक्तिकायाः चेतनायाश्चरमाभिव्यक्तित्वात्तादृशोक्तिः। २२।

रुद्राणामिति। रुद्राणामेकादशानां मध्ये शङ्करः चास्मि अहम्, यक्षरक्षसां मध्ये वित्तेशः कुवेरः अहम्, वसूनामष्टानां मध्ये पावकोऽग्निः अहम्, शिखरिणां पर्व्वतानां मध्ये मेरुः अहम्। २३।

पुरोधसामिति। हे पार्थ, पुरोधसां पुरोहितानाञ्च मध्ये मुख्यं प्रधानं बृहस्पतिं देवपुरोहितं मामन्तर्यामिणं विद्धि, सेनानीनां सेनापतीनां मध्ये स्कन्दो देवसेनापतिः अहम्, सरसां स्थिरजलाशयानां मध्ये सागरः समुद्रोऽस्मि अहम्। २४।

महर्षीणामिति। महर्षीणां मरीच्यादीनां सप्तानां मध्ये भृगुः अहम्, तस्यातितेजस्वित्वात्; गिरां वाचां मध्ये एकमक्षरमोङ्कारोऽस्मि अहम्, तस्य ब्रह्मवाचकत्वात्; यज्ञानां मध्ये जपयज्ञोऽस्मि अहम्, तस्य हिंसादोषशून्यत्वेनातिशोधकत्वादुपांशुजपेन च ध्यान-समत्वात्; स्थावराणां स्थितिमतां मध्ये हिमालयोऽहम्, उच्च-शिखरवतां मध्ये मेरुरित्युक्तोऽत्र स्थितिमतां मध्ये हिमालय इत्युक्त-त्वात् न पुनरुक्तिरिति व्याख्यातारः। योगिनिवासोऽयं हिमालयः स्थितिमत्त्वेनावञ्चलत्वेन तेषां तद्भावमुद्दीपयतीति विशेषोक्तिरेव इति वयम्। २५।

अश्वत्थः सर्व्ववृक्षाणां देवर्षीणाञ्च नारदः ।
गन्धर्व्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥२६॥
उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणाञ्च नराधिपम् ॥२७॥
आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥२८॥
अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्य्यमा चास्मि यमः संयमतामहम् ॥२९॥

अश्वत्थ इति । सर्व्ववृक्षाणां सर्व्ववनस्पतीनां मध्ये अश्वत्थः अहम्, तस्य छायादिदानेन बहुप्राणितर्पणात् ; देवर्षीणाञ्च मध्ये नारदोऽहम्, तस्य भक्तश्रेष्ठत्वात् ; गन्धर्व्वाणां मध्ये चित्ररथः, तस्य गायकश्रेष्ठत्वात् ; सिद्धानां जन्मत एव ज्ञानवैराग्ययुक्तानां मध्ये मुनिः कपिलः अहम्, तस्य परमार्थतत्त्वप्रदर्शकत्वात् । २६ ।

उच्चैःश्रवसमिति । अश्वानां मध्ये अमृतोद्भवममृतनिमित्तमथनोद्भवम् उच्चैःश्रवसं मामन्तर्यामिणं विद्धि, गजेन्द्राणां मध्ये अमृतोद्भवमैरावतं मां विद्धि, नराणां मध्ये मां नराधिपं नरपतिं विद्धि । २७ ।

आयुधानामिति । आयुधानामस्त्राणां मध्ये वज्रम् अहम्, धेनूनां मध्ये कामधुक् कामानां दोग्ध्री अस्मि अहम्, प्रजनः प्रजोत्पत्तिहेतुः कामः अहम्, भोगवासनाचरितार्थतोद्देश्यकस्य भगवदिच्छाविरोधित्वात्तथोक्तिः, सर्पाणां सविषाणामेकशिरसां मध्ये सर्पराजः वासुकिः अहम् । २८ ।

अनन्त इति । नागानां निर्विषाणामनेकशिरसां मध्ये नागराजः अनन्तः शेषः अहम्, यादसां जलजन्तूनां राजा वरुणः अहम्, पितॄणां मध्ये अर्य्यमा अर्य्यमाख्यः पितृराजः अहम्, संयमतां दण्डदातॄणां मध्ये यमः अहम् । २९ ।

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणाञ्च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥३०॥

पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसां चास्मि जाह्नवी ॥३१॥

सर्गाणामादिरन्तश्च मध्यञ्चैवाहमर्ज्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥३२॥

प्रह्लाद इति । दैत्यानां मध्ये प्रह्लादश्च अस्मि अहम, तस्य परम-भक्तत्वात्; कलयतां—गणनं कुर्व्वतामिति श्रीमच्छङ्करस्तदनुयायि-नश्च, वशीकुर्व्वतामिति श्रीमच्छ्रीधरबलदेवविश्वनाथाः—मध्ये कालः अहम्, स हि गणनाहेतुः, तस्य हि वशे सर्व्वं वसन्तीति हेतोः; मृगाणां पशूनां मध्ये मृगेन्द्रः सिंहः अहम्; पक्षिणां मध्ये वैनतेयः गरुड़ः अहम् । ३० ।

पवतामिति । पवतां पावनानां वेगवतां वा मध्ये पवनः वायुः अहम्, तस्य सर्व्वसंशोधकत्वात्, शस्त्रभृतां मध्ये रामः दाशरथिः—परशुराम इति श्रीमद्बलदेवः—अहम्, अवताराणां मध्ये रामो दाश-रथिर्गणनीय इति पश्चादाह श्रीमन्मधुसूदनः,—"साक्षात्स्वरूपस्यापि अनेन रूपेण चिन्तनार्थं 'वृष्णीनां वासुदेवोऽस्मी'तिवदयं पाठः ।" आविर्भूतस्वरूपत्वेऽपि 'प्राकृतवैभवे' प्रकाशमानत्वात् विभूतिमध्ये गणन-मिति तत्त्वम् । झषादीनां मत्स्यानां मध्ये मकरः अस्मि अहम्, स्रोतसां प्रवाहोदकानां मध्ये जाह्नवी गङ्गा अस्मि अहम् । ३१ ।

सर्गाणामिति । हे अर्ज्जुन, सर्गाणामाकाशादीनाम् आदिः मध्य-मन्तश्च अहम्—"अहमादिश्च मध्यञ्च भूतानामन्त एव च" (१०।२०) इत्यत्र भूतानामित्यतो भेदः । विद्यानां मध्ये अध्यात्मविद्या आत्म-विद्या अहम्, तस्याः सर्व्वश्रेष्ठत्वात् । तथाहि "अपरा ऋग्वेदो यजु-र्वेदः सामवेदोऽथर्व्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिष-

**अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।**
**अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥३३॥**

मिति । अथ परा यया तदक्षरमधिगम्यते ॥" (मु, उ, १।१।५) इति । आत्मविद्यया ब्रह्माधिगम इति तस्याः श्रेष्ठत्वे हेतुः । प्रवदतां वादिनां जल्पवितण्डे कुर्व्वतां मध्ये वादः अहम् तत्त्वार्थनिर्णयहेतुत्वात् । वादजल्पवितण्डाविषये श्रीमच्छ्रीधरः—"यत्र द्वाभ्यामपि प्रमाणतस्तर्कतः स्वपक्षः स्थाप्यते परपक्षश्छलजातिनिग्रहस्थानैर्दूष्यते स जल्पो नाम, यत्र त्वेकः स्वपक्षं स्थापयति अन्यस्तु छलजातिनिग्रहस्थानैस्तत्पक्षं दूषयति न तु स्वपक्षं स्थापयति सा वितण्डा नाम कथा । तत्र जल्पवितण्डे विजिगीषमाणयोर्वादिनोः शक्तिपरीक्षामात्रफले ; वादस्तु वीतरागयोः शिष्याचार्य्ययोरन्ययोर्वा तत्त्वनिरूपणफलः ।" इति । तथाच यतीन्द्रमतदीपिकायाम् "वीतरागकथा वादः ; पक्षद्वयसाधनवती विजिगीषुकथा जल्पः ; स्वपक्षस्थापनहीना तु वितण्डा ; अविवक्षितशब्दार्थारोपणाद्दूषणं छलम् ; स्वव्यापि दूषणं जातिः, असदुत्तरं जातिरिति वा ; पराजयहेतुर्निग्रहस्थानम्" इति । ३२ ।

अक्षराणामिति । अक्षराणां वर्णानां मध्ये अकारोऽस्मि अहम्, "अशेषाकारसंस्थितम्" इति तस्य स्वयं प्रच्छन्नस्याप्यशेषवर्णानामुच्चारणहेतुत्वात्, "अकारो वै सर्व्वा वाक्" इति श्रुत्युक्तन्यायादिति प्राञ्चः ; सामासिकस्य समाससमूहस्य मध्ये द्वन्द्वः द्वन्द्वसमासः अहम्, अत्र श्रीमन्नीलकण्ठ आह—"सामासिकस्य समाससमूहस्य मध्ये द्वन्द्वोऽस्मि, उभयपदप्रधानत्वादिति प्राञ्चः ; सूत्रमेकवासनं समासो विदुषां वा गुरुशिष्याणां मन्त्रार्थकथनार्थं वा एकत्रावस्थानं, तत्र विदितमर्थजातं सामासिकं ......तस्य मध्ये द्वन्द्वो रहस्योऽर्थोऽहम्—'द्वन्द्वं रहस्ये'ति सूत्रे द्वन्द्वशब्दस्य रहस्यवाचित्वं शाब्दिकप्रसिद्धम्" इति । अक्षयः निरवच्छिन्नः—'कालः कलयता'मित्यत्र क्षणमुहूर्त्तादिपरिच्छेदयुक्त इति भेदः—कालः अहम्, "सहर्तूणां मध्येऽक्षयः कालः

**मृत्युः सर्व्वहरश्चाहमुद्भवश्च भविष्यताम् ।**
**कीर्त्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥३४**

सङ्कर्षणमुखाग्निः कालाग्निः" इति श्रीमद्बलदेवः ; "महाकालो रुद्रः" इति श्रीमद्विश्वनाथः । कर्म्मफलदातॄणां मध्ये विश्वतोमुखो धाता कर्म्मफलस्य विधाता अहम् । ३३ ।

मृत्युरिति । मृत्यूनां मध्ये सर्व्वहरः सर्व्वस्मृतिविलोपकः प्रलयकालिकः सर्व्वसंहारकारी मृत्युः अहम्, भविष्यतां भाविनां वस्तूनां विकाराणां मध्ये उद्भवो जन्म अहम्, भाविनां कल्याणानाम् उद्भवः उत्कर्षः अहम् इति श्रीमच्छङ्करस्तदनुयायिनश्च ; नारीणां मध्ये कीर्त्तिः श्रीः वाक् स्मृतिर्मेधा धृतिः क्षमा च अहम्—"अर्थो विष्णुरियं वाणी नीतिरेषा नयो हरिः। बोधो विष्णुरियं बुद्धिर्धर्म्मोऽसौ सत्क्रिया त्वियम्॥" इत्यारभ्यान्ते सङ्क्षेपेणोक्तम् "किञ्चातिबहुनोक्तेन सङ्क्षेपेणेदमुच्यते। देवतिर्य्यङ्मनुष्यादौ पुन्नाम्नि भगवान् हरिः। स्त्रीनाम्नि लक्ष्मीर्मैत्रेय नानयोर्विद्यते परम्॥" (वि, पु, १अं, ८अ, १६—३२श्लो) इति मूलमस्य वचनस्य। अत्र श्रीमन्मधुसूदनः—"नारीणां मध्ये कीर्त्तिः श्रीर्वाक् स्मृतिर्मेधा धृतिः क्षमेति च सप्त धर्म्मपत्न्योऽहमेव। तत्र कीर्त्तिर्धार्म्मिकत्वनिमित्ता प्रशस्तत्वेन नानादिग्देशीयलोकज्ञानविषयतारूपा ख्यातिः, श्रीर्धर्म्मार्थकामसम्पत्, शरीरशोभा कान्तिः, वाक् सरस्वती सर्व्वस्यार्थस्य प्रकाशिका संस्कृता वाणी, चकारात् मूर्त्त्यादयोऽपि धर्म्मपत्न्यो गृह्यन्ते, स्मृतिश्चिरानुभूतार्थस्मरणशक्तिः, अनेकार्थधारणाशक्तिर्मेधा, धृतिरवसादेऽपि शरीरेन्द्रियसङ्घातोत्तम्भनशक्तिः, उच्छृङ्खलप्रवृत्तिकारणेन चापलप्राप्तौ तन्निवर्त्तनशक्तिर्वा, क्षमा हर्षविषादयोरविकृतचित्तता, यासामाभासमात्रसम्बन्धेनापि जनः सर्व्वलोकादरणीयो भवति ; तासां सर्व्वोत्तमत्वमतिप्रसिद्धमेव" इति । ३४ ।

**बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।**
**मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ३५॥**

बृहत्सामेति । 'वेदानां सामवेदोऽस्मि' इत्युक्तम् । साम्नां मध्ये बृहत्साम इन्द्रस्तुतिरूपं "त्वामिद्धि हवामहे" इति ऋचि गीयमानम् अहम्, छन्दसां छन्दोविशिष्टानामृचां मध्ये गायत्री अहम्, द्विजत्वापादकत्वात् सोमाहरणेन श्रेष्ठत्वादिति स्वामी । सोमाहरणकथैवं ब्राह्मणे श्रूयते,—सोमाहरणमिच्छद्भिर्देवैस्तदर्थं प्रेरितयोः जगतीच्छन्दसोस्त्रिष्टुभोर्मार्गमध्ये जगत्या त्र्यक्षराणि क्षीणानि त्रिष्टुभा चैकमक्षरम् । ततस्ते न्यूनाक्षरे भवतः षट्चत्वारिंशदक्षरा जगती पञ्चचत्वारिंशदक्षरा, चतुश्चत्वारिंशदक्षरा त्रिष्टुप् त्रिचत्वारिंशदक्षरेति । ततो गायत्री रक्षकान् विजित्य सोममाहरत, त्र्यक्षराणि चाक्षराण्याहरन्ती चतुरक्षरा साष्टाक्षरा संवृत्ता । पश्चाद्याचमाना स्वाक्षरैर्न्यूनैस्ते पूरयामास । तद्यथा—"चतुरक्षराणि ह वा अग्रे छन्दांस्यासुः । ततो जगती सोममच्छापतत्, सा त्रीण्यक्षराणि हित्वाजगाम ; ततस्त्रिष्टुप् सोममच्छापतत्, सैकमक्षरꣳ हित्वाजगाम ; ततो गायत्री सोममच्छापतत्, सैतानि चाक्षराणि हरन्त्यागच्छत् सोमं च, ततोऽष्टाक्षरा गायत्र्यभवत् । तस्मादाहुरष्टाक्षरा गायत्रीति ।............ताꣳ ह त्रिष्टुबुवाच उप त्वाहमायानि, त्रिभिरक्षरैरुप मा ह्वयस्व, मा मा यज्ञादन्तर्गा इति, तथेति तामुपाह्वयत, तत एकादशाक्षरा त्रिष्टुबभवत्........ । ताꣳ ह जगत्युवाच उप त्वाहमायानि, एकेनाक्षरेण उप मा ह्वयस्व, मा मा यज्ञादन्तर्गा इति, तथेति तामुपाह्वयत, ततो द्वादशाक्षरा जगत्यभवत्........ । तदाहुः, गायत्राणि वै सर्व्वाणि भवन्ति, गायत्री ह्येतदुपसृजमानैदिति ।" (श, प, ब्रा, ४।३।२।७—१०) इति ; "गायत्री वा इदं सर्व्वं भूतं यदिदं किञ्च" ( छा, उ, ३।१२।१) इति । मासानां मध्ये अभिनवशस्यसम्पत्सम्पन्नः मार्गशीर्षः अहम्, ऋतूनां मध्ये कुसुमाकरः वसन्तः तस्यातिरमणीयत्वात् । ३५ ।

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥३६॥

द्यूतमिति । छलयतां मिथो वञ्चनां कुर्व्वतां सम्बन्धि द्यूतं सर्व्व-स्वहरमस्मि अहम्—"यस्याहमनुगृह्णामि हरिष्यामि च तद्धनम्" इति न्यायात् सर्व्वस्वहरणमनुग्रह एवेत्यात्मनो द्यूतत्वनिरूपणम् । अत्र श्रीमच्छाङ्करस्था विभूतिषु न परा भक्तिः कर्त्तव्येति निर्द्धार्य्याह "द्यूत-राजसेवयोः प्रतिषेधाच्च ।" ५१ । "केषु केषु च भावेषु चिन्त्योऽसि भगवान्मया" (१०।१७) इत्यर्ज्जुनप्रश्नस्योत्तरे विभूतीराहाचार्य्यः ; अतो द्यूतस्य नराधिपस्यापि च चिन्तनीयत्वमायाति । एवं विभूतीनां चिन्तने तत्र तत्रावद्धचेतास्तत्तद्गतदोषाणामास्पदं स्यादिति साधूक्तं श्रीमच्छाण्डिल्येन विभूतिषु परा भक्तिर्न कर्त्तव्येति । यदि श्रीम-च्छाण्डिल्यकृतसिद्धान्त एव सर्व्वथानुसरणीयः स्यात् प्रश्नस्य तदुत्तरे विभूतिवचनस्य च निरर्थकत्वमुपपद्येत । कं वा पन्थानमवलम्ब्य विभूतिषु चिन्त्यो भगवानिति निर्द्धारितं को वा परभक्तिविषयः, विभूतीनां वा तत्र कोपयोगिता स्फुटं प्रतिभास्यते । न हि विभूतयो भगवान्, तासु भगवान् स्वशक्त्याद्याविष्करणेन प्रकाशमान इति तच्छक्त्यादय एव तत्र चिन्तनीया न तु विभूतय इति सर्व्व-मनवद्यम् । न हि शक्त्यादिपरिचिन्तनेन साक्षाद्भगवान् परिचि-न्तितो भवतीति तत्तच्छक्त्यादयोऽहंशब्दवाच्यस्यान्तर्यामिण एवेति तत्त्वमुपलभ्य तन्मयः स एवाहंशब्देन सर्व्वासु विभूतिष्वाचार्य्येणोप-दिष्टः । अत्र द्यूतं सर्व्वस्वहरणं भगवदनुग्रहकृतमिति जानन् द्यूता-सक्तश्चेत् द्यूते तमन्तर्यामिणं पश्यत्, तस्मिंश्च चित्तं समादधात्, द्यूतासक्त्यतिक्रमणेन भगवद्भक्तो भविष्यतीति विभूतिष्वात्मनो द्यूत-त्वेनाक्षेपः । तेजस्विनां सम्बन्धि तेजः अहम्, जेतॄणां सम्बन्धी जयोऽस्मि अहम्, व्यवसायिनामुद्यमशीलानां व्यवसाय उद्यमोऽस्मि अहम्, सत्त्ववतां सात्त्विकानां सम्बन्धि सत्त्वं धर्म्मज्ञानवैराग्यैश्वर्य्य-

वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥३७॥

बलवतां सत्त्वम्—बलिनां सत्त्वमस्मि बलमिति श्रीमद्बलदेवविश्वनाथौ—अहम् । ३६ ।

वृष्णीनामिति । वृष्णीनां यादवानां मध्ये वासुदेवः वसुदेवतनयोऽस्मि अहम् । अत्र श्रीमद्बलदेवः—वसुदेवतनयः सङ्कर्षण इति ; श्रीमद्विश्वनाथः स्वार्थिकेनाणा वसुदेव इत्यर्थो निष्पन्नः । एवं कष्टसाध्येनार्थेन न तयोः कृतार्थता रामशङ्करयोरपि विभूतिषु परिगणनात्, श्रीमच्छाण्डिल्यादिभिश्च वासुदेवशब्देनोपदिष्टा श्रीकृष्ण एवेति निर्णीतत्वात्, स्वयञ्च तेन "अहं यूयमसावार्य्य इमे च द्वारकौकसः । सर्व्वेऽप्येवं यदुश्रेष्ठ विमृश्याः सचराचरम् ॥" (भा, १०स्क, ८५अ, २०श्लो) इत्युक्त्वाऽऽत्मनो विभूतित्वं साधितम् । आविर्भूतस्वरूपत्वमस्येत्युक्तमध्यायारम्भ एवास्माभिः । अत्र 'पाण्डवानां धनञ्जयः' इत्युक्त्वा नरनारायणाख्यौ तावेति सिद्धान्तस्यापरिहार्य्यत्वात् सर्व्वे व्याख्यातारस्तमेवाऽऽश्रितवन्त इति सर्व्वा दुर्व्याख्या अपास्ताः । पाण्डवानां युधिष्ठिरादीनां मध्ये धनञ्जयः अहम । इह खलु युधिष्ठिरस्य परमधार्म्मिकत्वात् तस्यैव विभूतिमध्ये परिगणनमुचितं, कथं धनञ्जयस्येति वादः परसमये जयद्रथे युधिष्ठिरस्य मिथ्यावचनेन धनञ्जयस्य तु सत्यनिष्ठया दूरेणापसारितः । अपि चात्मना ब्रह्मचर्य्योपेतदीर्घकालवनवासदुःखं जानन्नपि स हृतगोधनस्य ब्राह्मणस्य दुःखप्रशमनाय द्रौपद्या सहोपविष्टं युधिष्ठिरमतिक्रम्य शस्त्रग्रहणायागारं प्रविवेश, समत्वेरितेन युक्ताभासेन समयप्रतिपालनात् प्रतिनिवर्त्तयितुं कृतयत्नस्यापि स्वाग्रजस्य सत्यरक्षणाय वाक्यमनभिनन्द्येति, तस्य युधिष्ठिरादपि श्रेष्ठत्वं सुव्यक्तम् । तद्यथा—"ब्राह्मणं समुपाकृत्य यशः प्राप्य च पाण्डवः । ततस्तद्गोधनं पार्थो दत्त्वा तस्मै द्विजातये ॥ आजगाम पुरं वीरः सव्यसाची धनञ्जयः । सोऽभिवाद्य गुरून् सर्व्वान् सर्व्वैश्चाप्यभिनन्दितः ॥ धर्म्मराज-

मृषावेदं व्रतमादिश मे प्रभो । समयः समतिक्रान्तो भवत्सन्दर्शने मया ॥ वनवासं गमिष्यामि समयो ह्येष नः कृतः । इत्युक्तो धर्मराजस्तु सहसा वाक्यमप्रियम् ॥ कथमित्यब्रवीत् वाचा शोकार्त्तः सज्जमानया । युधिष्ठिरो गुडाकेशं भ्राता भ्रातरमच्युतम् ॥ उवाच दीनो राजा च धनञ्जयमिदं वचः । प्रमाणमस्मि यदि ते मत्तः शृणु वचोऽनघ ॥ अनुप्रवेशे यद्वीर कृतवांस्त्वं ममाप्रियम् । सर्व्वं तदनुजानामि व्यलीकं न च मे हृदि ॥ गुरोरनुप्रवेशो हि नोपघातो यवीयसः । यवीयसोऽनुप्रवेशो ज्येष्ठस्य विधिलोपकः ॥ निवर्त्तस्व महाबाहो कुरुष्व वचनं मम । न हि ते धर्म्मलोपोऽस्ति न च मे धर्षणा कृता ॥ अर्ज्जुन उवाच—न व्याजेन चरेद्धर्म्ममिति मे भवतः श्रुतम् । न सत्याद्विचलिष्यामि सत्येनायुधमालभे ॥ वैशम्पायन उवाच—सोऽभ्यनुज्ञाप्य राजानं वनचर्य्याय दीक्षितः । वने द्वादश-वर्षाणि वासायानुजगाम ह ॥" (भा, प, २१५अ, २५—३५श्लो) इति । मुनीनां वेदार्थमननपराणां व्यासो द्वैपायनोऽहम् । न खलु व्यासो वेदविभागकर्त्तृक एव कृष्णद्वैपायन आसीत्, अष्टाविंशतिसंख्य-केषु व्यासेषु स तु चरमः, तत्कथं तस्य प्राधान्यं नान्येषामिति वादस्तु भिन्नवर्त्मनां समन्वयव्यापारे तस्याचार्य्यस्य सहायत्वात् तथात्वमिति-हेतोरपाकर्त्तव्यः । पञ्चमवेदमहाभारतप्रणयनेन तस्य माहात्म्यमिति विष्णुपुराणं, तद्यथा—"कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् । कोऽन्यो हि भुवि मैत्रेय महाभारतकृद्भवेत् ॥" (वि, पु, ३अं, ४अ, ५श्लो) इति । कवीनां सूक्ष्मार्थदर्शिनां मध्ये कविः उशना भार्गवोऽहम्, तस्य नीतिवित्तमत्वात् । स त्वात्ममाहात्म्यमेवमवोचत्—"अचिन्त्यं ब्रह्म निर्द्वन्द्वमैश्वरं हि बलं मम । यच्च किञ्चित् सर्व्वगतं भूमौ वा यदि वा दिवि । तस्याहमीश्वरो नित्यं तुष्टनीतः स्वयम्भुवा ॥ वर्षं जलं विमुञ्चामि प्रजानां हितकाम्यया । पुष्णाम्योषधयः सर्व्वा इति सत्यं ब्रवीमि ते ॥" (भा, प, ७८अ, २७—२८श्लो) इति । २७ ।

दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनञ्चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥३८॥

दण्ड इति । दमयतां दण्डप्रणेतॄणां सम्बन्धी दण्डो दमोऽहम्—दण्डस्य भयेन सम्भ्रमाच्च पापानिवृत्तिस्तेन च पापशोधनं भवतीति दण्डस्य भगवद्विभूतित्वम् । उक्तञ्च मनुना "तस्यार्थे सर्व्वभूतानां गोप्तारं धर्म्ममात्मजम् । ब्रह्मतेजोमयं दण्डमसृजत् पूर्व्वमीश्वरः ॥ तस्य सर्व्वाणि भूतानि स्थावराणि चराणि च । भयाद्भोगाय कल्पन्ते स्वधर्म्मान्न चलन्ति च ॥" ( मनु, ७म, १४।१५श्लो ) इति । अपिच "दण्डः शास्ति प्रजाः सर्व्वाः दण्ड एवाभिरक्षति । दण्डः सुप्तेषु जागर्त्ति दण्डं धर्म्मं विदुर्बुधाः ॥" (मनु, ७म, १८श्लो) इति । दण्डेन पापशोधनं यथा तत्रैव "राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः । निर्म्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥" (मनु, ८म, ३१८श्लो) इति । जिगीषतां जेतुमिच्छतां नीतिर्नयोऽस्मि अहम्—"मयि नीतिर्बलं भीमे रक्षिता चावयोर्जयः । मागधं साधयिष्याम इष्टिं त्रय इवाग्नयः ॥" (म, प, २०अ, ३श्लो) इत्यत्र दैहिकं बलं विना यद्यपि केवला नीतिर्न विजये हेतुरिति लक्ष्यते तथापि नीतेः प्रधानबलत्वमविवादविषयं तां विना बलप्रयोगस्यासकृद्व्यर्थत्वं स्फुटतरं सर्व्वत्र । गुह्यानां गोपनीयानां मौनं वाङ्नियमनमेव चास्मि अहम् । ज्ञानवतां तत्त्वज्ञानां ज्ञानमहम् ; श्रवणादिद्वारा परिपक्वसमाधिजन्यं ज्ञानमिति श्रीमद्धरिः । "तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥" ( १०।११ ) इति स्वयमेवान्तर्यामी ज्ञानदीपः । अल्पज्ञानां जीवानां मोहप्रमादाधीनता स्वल्पपरिहार्य्या, यदा हि जायते तेषां भगवता सम्बन्धस्तदा तज्ज्ञानेन भवन्ति तेषां ज्ञानवत्ता, अतएवाहाचार्य्यः—"ज्ञानं ज्ञानवतामहम्" इति । ३८ ।

यच्चापि सर्व्वभूतानां बीजं तदहमर्ज्जुन ।
न तदस्ति विना यत् स्यान्मया भूतं चराचरम् ॥३९॥
नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥४०॥
यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्ज्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ॥४१॥
अथवा बहुनैतेन किं ज्ञातेन तवार्ज्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥४२॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः ।

यच्चापीति । सर्व्वभूतानां यच्चापि बीजं प्ररोहकारणं, हे अर्ज्जुन, तत् अहमेव । कथम्? चराचरं स्थिरचरं भूतं न तदस्ति यत् मया विना स्यात् । "अहमात्मा गुडाकेश सर्व्वभूताशयस्थितः ।" इत्यनेनारभ्य "न तदस्ति विना यत् स्यान्मया भूतं चराचरम्" इत्यनेनाध्यायमिममुपसंहृतवानाचार्य्यः । शास्त्रेऽस्मिन्नन्तर्य्यामिणं हृत्स्थमीश्वरमुपास्यत्वेनोपस्थापितवान् स इति तत्त्वं द्रष्टव्यं सुधीभिः । ३९ ।

अनन्तस्येश्वरस्य विभूतेरन्तो न भवितुमर्हति, अतएवाहाचार्य्यो नान्त इति । हे परन्तप, मम दिव्यानां विभूतीनां नान्तोऽस्ति । एष तु विभूतेर्विस्तरो मया उद्देशतः एकदेशेन प्रोक्तः । ४० ।

अनुक्तानां संग्रहार्थमाह यदिति । यत् यत् सत्त्वं वस्तुजातं विभूतिमत् ऐश्वर्य्यवत् श्रीमत् सम्पत्तिमत् शोभावत् कान्तिमत् सौन्दर्य्येण युक्तम्, ऊर्ज्जितं बलाद्यतिशयेन युक्तं, तत्तत् मम तेजोंऽशसम्भवं चिच्छक्त्यंशसमुत्पन्नम् अवगच्छ जानीहि । ४१ ।

एवं परिच्छिन्नभावेन चिन्तनोपायमुक्त्वाधुना पुनरखण्डभावेन दर्श-

मोपायमाह अथवेति। हे अर्जुन, बहुना एतेन ज्ञातेन तव किम्, न किमपि प्रयोजनमिति भावः, इदं कृत्स्नं जगत् एकांशेन एकदेश-मात्रेण विष्टभ्य व्याप्य अहमन्तर्यामी स्थितः तदनीतत्वेनेति शेषः। "मया ततमिदं कृत्स्नं जगदव्यक्तमूर्त्तिना। मत्स्थानि सर्व्वभूतानि न चाहं तेष्ववस्थितः॥" (९।४) इत्यत्र तत्त्वमुक्तम्।

अध्यायस्यास्यार्थसंग्रहः श्रीमच्छ्रीधरेण—"तदनेन भगवतो नाना-विधविभूतीर्ध्येयत्वेन ज्ञेयत्वेन चोपदिश्यान्ते सर्व्वप्रपञ्चात्मकं ध्येयं रूपं दर्शयित्वा 'त्रिपादस्यामृतं दिवि' इति प्रपञ्चाधिकं निरूपाधिकं तत्त्वमुपदिशता परिपूर्णः सच्चिदानन्दैकतानस्तत्पदलक्ष्योऽर्थो निर्द्धा-रितः" इति; श्रीमच्छ्रीधरेण—"इन्द्रियद्वारतश्चित्ते वहिर्धावति सत्यपि। ईशदृष्टिविधानाय विभूतीर्दशमेऽब्रवीत्॥" इति; श्रीम-द्बलदेवेन "यच्छक्तिलेशात् सूर्य्याद्या भवन्त्यत्युग्रतेजसः। यदंशेन धृतं विश्वं स कृष्णो दशमेऽर्च्यते॥" इति; श्रीमद्विश्वनाथेन—"विश्वं श्रीकृष्ण एवातः सेव्यस्तद्भक्तया धिया। स एवास्वाद्यमाधुर्य्य इत्यधा-यार्थ ईरितः॥" इति; श्रीमन्नरहरिणा—"विभूतीनां परिज्ञानं सगुणध्यानकारणम्। ध्यानयोगान्निर्विशेषं ज्ञातुं शक्नोति बुद्धिमान्॥" इति। ४२।

इति श्रीमद्भगवद्गीतासमन्वयभाष्ये दशमोऽध्यायः।

---

अर्ज्जुन उवाच—

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥१॥
भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥२॥
एवमेतद्यथात्थ त्वमात्मानं परमेश्वर ।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥३॥
मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥४॥

अध्यायस्यास्यारम्भे श्रीमच्छङ्कर आह—"भगवतो विभूतय उक्ताः, तत्र च 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्'इति भगवताभिहितं श्रुत्वा यज्जगदात्मकं रूपमाद्यमैश्वरं तत् साक्षात्कर्त्तुमिच्छन्नर्ज्जुन उवाच" इति। श्रीमद्रामानुज आह—"एवं भक्तियोगनिष्पत्तये तद्वृद्धये च सकलेतरविलक्षणेन स्वाभाविकेन भगवदसाधारणेन कल्याणगुणगणेन सह भगवतः सर्व्वात्मकत्वं तद्व्यतिरिक्तस्य कृत्स्नस्य चिदचिदात्मकस्य वस्तुजातस्य तच्छरीरतया तदायत्तस्वरूपस्थितिप्रवृत्तित्वञ्चोक्तम्। तदनन्तरं तदेव भगवदसाधारणस्वभावं कृत्स्नस्य तदायत्तस्वरूपस्थितिप्रवृत्तिताञ्च भगवत्सकाशादुपेत्यन्वेति च निश्चित्य तथाभूतं भगवन्तं साक्षात्कर्त्तुकामोऽर्ज्जुन उवाच" इति। श्रीमच्छ्रीधरः—"पूर्व्वाध्यायान्ते 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति विश्वात्मकं पारमेश्वररूपमुपक्षिप्तं, तद्दिदृक्षुः पूर्व्वोक्तमभिनन्दन्नर्ज्जुन उवाच" इति। श्रीमद्बलदेव आह—"पूर्व्वेण 'अहमात्मा गुडाकेश

सर्व्वभूताशयस्थित:’ इति विभूतिकथनोपक्रमे ‘विष्टभ्याहमिदं कृत्स्न-मेकांशेन स्थितो जगत्’ इति तदुपसंहारे निखिलविभूत्याश्रयो महत्-स्रष्टा पुरुषः यस्य श्रीकृष्णस्यावतारः स तु महत्स्रष्ट्रादिसर्व्वावतारीति तन्मुखात् प्रतीत्य सद्यानन्दसिन्धुनिमग्नोऽर्जुनस्तत्पुरुषरूपं दिदृक्षुः कृष्णोक्तमनुवदति” इति। श्रीमन्मधुसूदन आह—“पूर्व्वाध्याये नाना-विभूतीरुक्त्वा ‘विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्’ इति विश्वात्मकं पारमेश्वरं रूपं भगवताऽन्तेऽभिहितं श्रुत्वा परमोत्कण्ठित-स्तत्साक्षात्कर्त्तुमिच्छन् पूर्व्वोक्तमभिनन्दन्नर्ज्जुन उवाच” इति। श्रीम-न्नीलकण्ठ आह—“पूर्व्वस्मिन्नध्याये योगो विभूतिश्च व्याख्येयत्वेन प्रतिज्ञातौ ‘एतां विभूतिं योगञ्च मम यो वेत्ति’ इति, ‘आत्मनो योगं विभूतिञ्च जनार्द्दन, भूयः कथय’ इतीतरेण च श्रोतव्यत्वेन च प्रार्थितौ। तत्र ‘अहमात्मा गुडाकेश सर्व्वभूताशयस्थितः’ इति सङ्क्षेपेण योगो भगवतः सर्व्वाधारत्वलक्षण उक्तः प्राग्विभूतिकथनात्; तदन्ते च ‘विष्ट-भ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्’ इति कुसूलेन धान्यमिव मयेदं जगद्विष्टब्धमित्युक्त्वा स एव स्मारितः। तदेव भगवतः सर्व्वभूता-धारत्वं साक्षात्कर्त्तुकामोऽर्ज्जुन उवाच” इति। श्रीमद्विश्वनाथ आह —“विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्’ इति सर्व्वविभूत्या-श्रयमादिपुरुषं स्वप्रियसखस्यांशं श्रुत्वा परमानन्दनिमग्नस्तद्रूपं दिदृक्ष-माणो भगवदुक्तमभिनन्दति” इति। सर्व्वेषां व्याख्यातॄणां मतसंग्रह-णेनेदमायाति—नोरूपस्य रूपमिदं जगत् तस्य भगवतो देहत्वेनोय-त्वेन, स तु स्वयं तस्यात्मा सर्व्वावयवशून्यः, न च जगद्रूपे देहे बद्धः, किन्तर्हि तदतीतः; अतीतमप्यस्य जगतस्तस्मिन्नेव तं द्रष्टुकामोऽर्ज्जुन उवाचेति।

अथमस्तावदाचार्य्योक्तमभिनन्दन् सर्व्वान्तर्यामिणो रूपमैश्वरं दिदृ-क्षुराह चतुर्भिः मदनुग्रहायेति, भवाप्ययाविति, एवमिति, मन्यस इति। मदनुग्रहाय मदनुग्रहार्थं परमं निरतिशयं गुह्यं गोपनीयम् अध्यात्मसंज्ञितमात्मानात्मविवेकविषयं यत् वचस्त्वयान्तर्यामिणोक्तं

श्रीभगवानुवाच—

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥५॥
पश्यादित्यान् वसून् रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्व्वाणि पश्याश्चर्य्याणि भारत ॥६॥
इहैकस्थं जगत् कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥७॥
न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥८॥

तेन वचसा मम मोहोऽशोच्यशोचनादिरूपो विगतो विनष्टः। हे कमलपत्राक्ष, त्वत्त आचार्य्येतनावधिष्ठितादन्तर्यामिणो भूतानां भवाप्ययावुत्पत्तिप्रलयौ विस्तरशो मया श्रुतौ, अव्ययं माहात्म्यञ्च श्रुतं तवेति शेषः, "मत्तः परतरं नान्यत् किञ्चिदस्ति" (७।७) इत्यादिभिः। हे परमेश्वर, त्वमात्मानं यथा आत्थ कथयसि, एतदेवमेव। हे पुरुषोत्तम, ते तव ऐश्वरं रूपं द्रष्टुमिच्छामि। हे प्रभो, तत् रूपं मया द्रष्टुं शक्यमिति यदि मन्यसे, हे योगेश्वर, ततः त्वमात्मानमव्ययं जगति प्रकाशमानमपि स्वयं रूपान्तरमभजन्तं दर्शय मम प्रत्यक्षविषयं कुरु। १—४।

एवं प्रार्थितोऽर्ज्जुनेनाचार्य्य आह चतुर्भिः पश्येति, पश्येति, इहेति, न त्विति। हे पार्थ, मम रूपाणि नानाविधानि दिव्यानि अप्राकृतानि नानावर्णाकृतीनि शुक्लपीतादयो विविधा वर्णास्तथा आकृतयोऽवयवविशेषा येषां तानि शतशः सहस्रशः पश्य। श्वेतद्वीपगतेन नारदेन विश्वरूपमदृश्यत तत्प्रतिपत्त्यनुसारतः, इह तु युद्धोद्यतेनार्ज्जुनेन तन्मनोभावानुसारीणि भीषणानि रूपाण्यवालोक्यन्तेति विशेषोऽत्र बोद्धव्यः। नारदस्य विश्वरूपदर्शनं यथा शान्तिपर्व्वणि—"प्राप्य श्वेतं महाद्वीपं

नारदो भगवानृषिः। ददर्श तानेव नरान् श्वेतांश्चन्द्रसमप्रभान्॥ पूजयामास शिरसा मनसा तैश्च पूजितः। दिदृक्षुर्जप्यपरमः सर्व्वकृच्छ्रगतः स्थितः॥ भूत्वैकाग्रमना विप्र ऊर्द्ध्वबाहुः समाहितः। स्तोत्रं जगौ स विश्वाय निर्गुणाय गुणात्मने॥" (शा, प, ३३८अ, १—२श्लो) इति। स्तोत्रानन्तरं सोऽदर्शत्तद्रूपमेवम्—"एवं स्तुतः स भगवान् गुह्यैस्तथ्यैश्च नामभिः। तं मुनिं दर्शयामास नारदं विश्वरूपधृक्॥ किञ्चिच्चन्द्राद्विशुद्धात्मा किञ्चिच्चन्द्राद्विशेषवान्। कृशानुवर्णः किञ्चिच्च किञ्चिद्धिष्ण्याकृतिः प्रभुः॥ शुकपत्रनिभः किञ्चित्किञ्चित् स्फाटिकसन्निभः। नीलाञ्जनचयप्रख्यो जातरूपप्रभः क्वचित्॥ प्रवालाङ्कुरवर्णश्च श्वेतवर्णस्तथा क्वचित्। क्वचित् सुवर्णवर्णाभो वैदूर्य्यसदृशः क्वचित्॥ नीलवैदूर्य्यसदृश इन्द्रनीलनिभः क्वचित्। मयूरग्रीववर्णाभो मुक्ताहारनिभः क्वचित्॥ एतान् बहुविधान् वर्णान् रूपैर्बिभ्रत् सनातनः। सहस्रनयनः श्रीमाञ्छतशीर्षः सहस्रपात्॥ सहस्रोदरबाहुश्च अव्यक्त इति च क्वचित्। ओङ्कारमुद्गिरन् वक्त्रात् सावित्रीञ्च तदन्वयाम्॥ शेषेभ्यश्चैव वक्त्रेभ्यश्चतुर्व्वेदान् गिरन् बहून्। आरण्यकं जगौ देवो हरिर्नारायणो वशी॥ वेदीं कमण्डलुं शुभ्रान् मणीनुपानहौ कुशान्। अजिनं दण्डकाष्ठञ्च ज्वलितञ्च हुताशनम्। धारयामास देवेशो हस्तैर्यज्ञपतिस्तदा॥ तं प्रसन्नं प्रसन्नात्मा नारदो द्विजसत्तमः। वाग्यतः प्रणतो भूत्वा ववन्दे परमेश्वरम्॥" (शा, प, ३३८अ, १—१०श्लो) इति। इह श्रीमदृषिनारायणापहृतचित्तो नारदो विश्वमूर्त्तिमपश्यत्तद्भावानुरूपामिव, अर्ज्जुनस्त्वाचार्य्यप्रतिपत्तिविमिश्रस्वप्रतिपत्त्यनुसारतस्तद्रूपमेव रूपान्तरितमपश्यदिति तत्त्वम्। दुर्य्योधनसभायामदर्शयदाचार्य्यो यद्रूपं तत्र यत् किञ्चिद्विशेषत्वं लक्ष्यते तदपि तत्समयोचितभावानुसारतस्तद्यथा—"एकोऽहमस्मि यन्मोहान्मन्यसे मां सुयोधन। परिभूय सुदुर्बुद्धे ग्रहीतुं मां चिकीर्षसि॥ इहैव पाण्डवाः सर्व्वे तथैवान्धकवृष्णयः। इहादित्याश्च रुद्राश्च वसवश्च महर्षिभिः॥ एवमुक्त्वा जहासोच्चैः केशवः परवीरहा। तस्य संस्मयतः शौरेर्विद्युद्रूपा महा-

त्मनः ॥ अङ्गुष्ठमात्रास्त्रिदशाः मुमुचुः पावकार्चिषः । अस्य ब्रह्मा ललाटस्थो रुद्रो वक्षसि चाभवत् ॥ लोकपाला भुजेष्वासन्वह्निरास्यादजायत । आदित्याश्चैव साध्याश्च वसवोऽथाश्विनावपि ॥ मरुतश्च सहेन्द्रेण विश्वेदेवास्तथैव च । बभूवुश्चैकरूपाणि यक्षगन्धर्वरक्षसाम् ॥ प्रादुरास्तां तथा दोर्भ्यां सङ्कर्षणधनञ्जयौ । दक्षिणेनार्ज्जुनो धन्वी हली रामश्च सव्यतः ॥ भीमो युधिष्ठिरश्चैव माद्रीपुत्रौ च पृष्ठतः । अन्धका वृष्णयश्चैव प्रद्युम्नप्रमुखास्ततः ॥ अग्रे बभूवुः कृष्णस्य समुद्यतमहायुधाः । शङ्खचक्रगदाशक्तिशार्ङ्गलाङ्गलनन्दकाः ॥ अदृश्यन्ताथ तान्येव सर्व्वप्रहरणानि च । नानाबाहुषु कृष्णस्य दीप्यमानानि सर्व्वशः ॥ नेत्राभ्यां नस्तश्चैव श्रोत्राभ्याञ्च समन्ततः । प्रादुरासन् महारौद्राः सधूमाः पावकार्चिषः ॥ रोमकूपेषु च तथा सूर्य्यस्येव मरीचयः । तं दृष्ट्वा घोरमात्मानं केशवस्य महात्मनः ॥ न्यमीलयन्त नेत्राणि राजानस्त्रस्तचेतसः । ऋते द्रोणञ्च भीष्मञ्च विदुरञ्च महामतिम् ॥" (उ, प, १३०अ, २—१४श्लो) इति ।

वैदिकपुरुषसूक्तानुसारतः साधनं योगिषु तादृशीं प्रतिपत्तिमधात् । तामेव—योगप्रभावत इति प्राञ्चः, इच्छाशक्तेः क्रियया तादृक्प्रबलाकाङ्क्षोद्दीपनेन चेति नव्याः,—तत्प्रभावाधीनेषु प्रतिफलितवन्तस्ते । न केवलं विश्वमूर्त्तिं, स्वेच्छानुसारतोऽन्यामपि प्रतिपत्तिमुद्भावयन्ते, यथा व्यासो मृतपुत्रादीनदर्शयद्गान्धारीं कुन्तीं सुभद्रां द्रौपदीञ्चान्यांश्च । स तदा तत्रोपस्थितानाह—"यच्च वै हृदि सर्व्वेषां दुःखमेतच्चिरं स्थितम् । तदद्य व्यपनेष्यामि परलोककृताद्भयात् ॥ सर्व्वे भवन्तो गच्छन्तु नदीं भागीरथीं प्रति । तत्र द्रक्ष्यथ तान् सर्व्वान् ये हतास्मिन् रणाजिरे ॥" (आ, वा, प, ३१अ, १८।१९श्लो) इति । सर्व्वेषु निशायां व्यासमुपागच्छत्सु—"ततो व्यासो महातेजाः पुण्यं भागीरथीजलम् । अवगाह्य जुहावाथ सर्व्वान् लोकान् महामुनिः ॥ पाण्डवानाञ्च ये योधाः कौरवाणाञ्च सर्व्वशः । राजानश्च महाभागा नानादेशनिवासिनः ॥ ततः स तुमुलः शब्दो जलान्ते जनमेजय । प्रादु-

रासीद्यथा पूर्व्वं कुरुपाण्डवसेनयोः ॥ ततस्ते पार्थिवाः सर्व्वे भी-
द्रोणपुरोगमाः । ससैन्याः सलिलात् तस्मात् समुत्तस्थुः सहस्रशः ॥
विराटद्रुपदौ चैव सहपुत्रौ ससैनिकौ । द्रौपदेयाश्च सौभद्रो राक्षस-
घटोत्कचः ॥ कर्णदुर्य्योधनौ चैव शकुनिश्च महारथः । दुःशासनादय-
श्चैव धार्त्तराष्ट्रा महाबलाः ॥ जारासन्धिर्भगदत्तो जलसन्धश्च वीर्य्यवान्
भूरिश्रवाः शलः शल्यो वृषसेनश्च सानुजः ॥ लक्ष्मणो राजपुत्रश्च धृष्ट-
द्युम्नस्य चात्मजः । शिखण्डिपुत्राः सर्व्वे च धृष्टकेतुश्च सानुजः ॥
अचलो वृषकश्चैव राक्षसश्चाप्यलायुधः । वाह्लिकः सोमदत्तश्च चेकि-
तानश्च पार्थिवः ॥ एते चान्ये च बहवो बहुत्वाद्ये न कीर्त्तिताः ।
सर्व्वे भासुरदेहास्ते समुत्तस्थुर्जलात्ततः ॥ यस्य वीरस्य यो वेशो यो
ध्वजो यच्च वाहनम् । तेन तेन व्यदृश्यन्त समुपेता नराधिपाः ॥
दिव्याम्बरधराः सर्व्वे सर्व्वे भ्राजिष्णुकुण्डलाः । निर्वैरा निरहङ्कारा
विगतक्रोधमत्सराः ॥ गान्धर्व्वैरुपगीयन्तस्तूयमानाश्च वन्दिभिः । दिव्य-
माल्याम्बरधरा वृताश्चाप्सरसां गणैः ॥ धृतराष्ट्रस्य च तदा दिव्यं
चक्षुर्नराधिप । मुनिः सत्यवतीपुत्रः प्रीतः प्रादात् तपोबलात् ॥
दिव्यज्ञानबलोपेता गान्धारी च यशस्विनी । ददर्श पुत्रांस्तान् सर्व्वान्
ये चान्येऽपि मृधे हताः ॥" (आ, वा, प, ३२अ, ४—१८श्लो॰)
इति ।

किं वा तत्त्वं विश्वमूर्त्तेस्तदत्र विवेच्यम् । जगदिदं भगव[illegible]
रूपमिति प्राचां सिद्धान्तो न पुनः संहितोपनिषद्विरुद्धः । वैष्णा [illegible]-
[illegible] सिद्धान्तमनुसृतवन्तः, अथापि सर्व्वथास्वीकारमप्यस्यास-
म्भवं पश्यन्तः "एतावानस्य महिमातो ज्यायांश्च पूरुषः । पादोऽस्य
विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥" (ऋक्सं, १०म, ९०सू,
३ऋक्), "तस्माद्विराडजायत विराजो अधि पूरुषः । स जातो अत्य-
रिच्यत पश्चाद्भूमिमथो पुरः ॥" (५ऋक्) इति पुरुषसूक्तानुसारत-
स्तेषामाराध्यो देवः परमपुरुषोऽवतारी ; महतः स्रष्टाद्यावतारस्तस्यांश
इति निर्णीय सच्चिदानन्दस्वरूपरूपोऽयमिति निश्चित्य केशादयः सर्व्वे-

ऽवयवाः सच्चिदानन्दोपादाना न तु मायिका इति व्याचक्षत। देवा-दयो जगदुपादानव्यतिरिक्ता न भवन्तीति "तस्मात्त्वम् विश्वस्य स्थूलतया सूक्ष्मतया च नित्यं भगवद्रूपत्वमस्त्येव" इत्याद्यास्तेषामुक्तिषु तैरपि स्वीकृतम्। "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" (१०।४२) इति विश्वस्य भगवत्यन्तर्यामिणि स्थितिः, न तु तस्मिन् स्थित्वा तदधीन इति विश्वरूपस्य स्वान्तर्भूतविश्वस्य "वासुदेवः सर्व्वम्" (७।१९) इत्याचार्य्यैः प्रकाशमानस्यान्तर्यामिणः सर्व्वान्तर्भावकत्वं स्वप-तिपत्त्यनुसारतोऽनुभूतमर्ज्जुनेन। "पादोऽस्य विश्वा भूतानि" इत्या-दित्यादीन् सर्व्वान् स तस्मिन्नपश्यत्। अनुक्रमणिकापर्व्वणि विश्वरूप-दर्शनमेवमुपनिबद्धम्—"यदाश्रौषं कश्मलेनाभिपन्ने रथोपस्थे सीदमाने-ऽर्ज्जुने वै। कृष्णं लोकान् दर्शयानं शरीरे तदा नाशंसे विजयाय सञ्जय॥" (आ, प, १अ, १७९श्लो) इति। नात्र तत्त्वोपदेशदानस्यो-ल्लेखोऽस्त्यतः केवलं विश्वरूपमदर्शयन्नेवार्ज्जुनस्य मोहमपनीतवानाचार्य्य इति संशयस्त्वाकिञ्चित्करः। विश्वरूपदर्शनमात्रस्योल्लेखोऽर्ज्जुनस्य सौ-भाग्यातिशयप्रदर्शनाय, यतोऽन्यथा पर्व्वसंग्रहाध्याये सौतिना नोक्तं—"अतः परं विचित्रार्थं भीष्मपर्व्व प्रचक्षते। जम्बूखण्डविनिर्म्माणं यत्रोक्तं सञ्जयेन च॥ यत्र यौधिष्ठिरं सैन्यं विषादमगमत्परम्। यत्र युद्धमभूद्घोरं दशाहानि सुदारुणम्॥ कश्मलं यत्र पार्थस्य वासुदेवो महामतिः। मोहजं नाशयामास हेतुभिर्मोक्षदर्शिभिः॥" (आ, प, २अ, २५३—२५६श्लो) इति।

हे भारत, आदित्यान् द्वादश, वसूनष्टौ, रुद्रानेकादश, अश्विनौ द्वौ, मरुतः सप्तसप्तगणान् पश्य, तथा अदृष्टपूर्व्वाणि बहूनि आश्चर्य्याणि रूपाणि पश्य। हे गुडाकेश, इह अस्मिन् मम देहे अद्य एकस्थं सच-राचरं कृत्स्नं जगत्, यच्च अन्यत् द्रष्टुमिच्छसि, पश्य। अनेनैव स्वच-क्षुषा मामन्तर्यामिणं सर्व्वान्तर्भावकत्वेन न तु द्रष्टुं शक्नोषि, ते तुभ्यं दिव्यं चक्षुः स्वप्रभावसंक्रमणेनाद्भुतं ददामि, मे मम ऐश्वरं योगमघ-टनघटनसामर्थ्यं पश्य। ५—८।

सञ्जय उवाच—

एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥९॥

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥१०॥

दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्व्वाश्चर्य्यमयं देवमनन्तं विश्वतोमुखम् ॥११॥

दिवि सूर्य्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥१२॥

तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥१३॥

किम्भूतं रूपं स दर्शितवान् तदाह सञ्जयः षड्भिः । हे राजन् धृतराष्ट्र, महायोगेश्वरो हरिः एवमुक्त्वा ततः पार्थाय परमैश्वरं रूपं दर्शयामास । किम्भूतम्—"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्" (ऋक्सं, १०म, ९०सू, १ऋक्) इत्युक्तप्रकारेण अनेकवक्त्रनयनम्, अनेकाद्यन्तोऽनन्तबाहुरिति श्रीमन्माध्वः, अनेकानि वक्त्राणि नयनानि यस्मिंस्तत्, अनेकाद्भुतदर्शनम् अनेकानि अद्भुतानि दर्शनानि यस्मिंस्तत्, अनेकदिव्याभरणम् अनेकानि दिव्यानि अप्राकृतानि आभरणानि यस्मिंस्तत्, दिव्यानेकोद्यतायुधम् दिव्यानि अप्राकृतानि अनेकानि उद्यतानि आयुधानि यस्मिंस्तत्, दिव्यमाल्याम्बरधरं दिव्यानि अप्राकृतानि माल्यानि अम्बराणि च धारयतीति तत्, दिव्यगन्धानुलेपनं दिव्योऽप्राकृतो गन्धो यस्य तदनुलेपनं यस्य तत्, सर्व्वाश्चर्य्यमयम् अनेकाद्भुतप्रचुरम्, देवं द्योतनात्मकम्, अनन्तम् अविच्छिन्नम्, विश्वतोमुखं विश्वतः सर्व्वतः मुखानि यस्मिंस्तद्रूपमिति पूर्व्वेणान्वयः । ९—११ ।

यदा परमात्मनान्तर्भावितं विश्वमेवमन्तश्चक्षुषः प्रत्यक्षं भवति

ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥१४॥

अर्जुन उवाच—

पश्यामि देवांस्तव देव देहे
सर्व्वांस्तथा भूतविशेषसङ्घान् ।
ब्रह्माणमीशं कमलासनस्थ-
मृषींश्च सर्व्वानुरगांश्च दिव्यान् ॥१५॥

तदा सर्व्वा दिशः समन्ता अपूर्व्वदीप्त्या समावृताः प्रतिभान्तीति निखिलसाधकानुभूतिः सञ्जयेन विव्रियते दिवीति । दिवि अन्तरिक्षे यदि युगपत् सूर्य्यसहस्रस्य सा उत्थिता भवेत् तदा सा भास्तस्य महात्मनो विश्वमूर्त्तेर्भासः सदृशी स्यात्, सहस्रशब्दोऽनन्तवाचीति श्रीमन्माध्वः । तत्र तस्मिन् देवदेवस्य शरीरे एकस्थम् एकस्मिन् स्थितं कृत्स्नं जगत् अनेकधा विभक्तं पाण्डवस्तदाऽपश्यत् दृष्टवान् । ततस्तदनन्तरं तं दृष्ट्वा विस्मयाविष्टः विस्मयरसेनाप्लुतः हृष्टरोमा पुलकितो धनञ्जयोऽर्ज्जुनो देवं शिरसा प्रणम्य भक्त्यतिशयेन नमस्कृत्य कृताञ्जलिः सम्पुटीकृतकरः सन् अभाषत उक्तवान् । १२—१४ ।

किन्तद्विश्वरूपं यदहं पश्यामीत्याहार्ज्जुनः । हे देव, तव देहे देवान् तथा सर्व्वान् भूतविशेषसङ्घान् भूतविशेषाणां स्थिरचराणां नानासंस्थानविशेषाणां सङ्घाः समूहास्तान्, कमलासनस्थम् ईशं प्रजानां स्वामिनं ब्रह्माणम्, तदन्तर्यामिणमीशं गर्भोदकशयमिति श्रीमद्बलदेवः, ऋषींश्च सर्व्वान्, दिव्यान् दिवि भवान् उरगांश्च । दिवि भवाः सर्पाः, यथा तैत्तिरीयब्राह्मणे—"इदं सर्पेभ्यो हविरस्तु जुष्टम् आश्रेषा येषामनुयान्ति चेतः । येऽन्तरिक्षं पृथिवीं क्षियन्ति ते नः सर्पासो हवमागमिष्टाः ॥ ये रोचने सूर्य्यस्यापि सर्पाः ये दिवं देवीमनुसञ्चरन्ति । येषामाश्रेषा अनुयन्ति कामं तेभ्यः सर्पेभ्यो मधुमज्जुहोमि ॥" (३।१।१।५।६) 'आश्रेषा आश्लेषाः—नक्षत्रदेवाः' इति सायनः । १५ ।

अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वां सर्व्वतोऽनन्तरूप ।
नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर विश्वरूप ॥१६॥
किरीटिनं गदिनं चक्रिणञ्च
तेजोराशिं सर्व्वतो दीप्तिमन्तम् ।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ता-
द्दीप्तानलार्कद्युतिमप्रमेयम् ॥१७॥

अनेकेति । हे अनन्तरूप, अनेकबाहूदरवक्त्रनेत्रम् अनेके बाहव उदराणि वक्त्राणि नेत्राणि यस्य तव त्वाम्—अनेकशब्दोऽनन्तवाचीति श्रीमध्वाचार्य्यः—सर्व्वतः पश्यामि, हे विश्वेश्वर, विश्वरूप—विश्वशब्दोऽप्यनन्तवाचीति श्रीमध्वाचार्य्यः—न अन्तं न मध्यं न पुनस्तव आदिं पश्यामि । १६ ।

किरीटिनमिति । किरीटिनं शिरोभूषणयुक्तं, गदिनं गदायुक्तम्, चक्रिणं चक्रयुक्तं, तेजोराशिं तेजःपुञ्जं, सर्व्वतो दीप्तिमन्तं, दुर्निरीक्ष्यं दुःखेन निरीक्ष्यस्त्वां, समन्तात् सर्व्वत्र दीप्तानलार्कद्युतिं दीप्तयोरनलार्कयोः द्युतिरिव द्युतिर्यस्य तव त्वाम्, अप्रमेयमपरिच्छेद्यं प्रमातुमशक्यं त्वां पश्यामि । किमिदं किरीटादिकं प्रदर्शितं तन्नारायणवचनेन प्राक् । यतीन्द्रमतदीपिकायान्तु दृश्यते—"भगवतोऽप्राकृतदिव्यमङ्गलविग्रहस्तु अस्त्रभूषणाध्यायोक्तसर्व्वोपाश्रयः । तद्यथा—पुरुषस्य कौस्तुभाकारत्वं प्रकृतेः, श्रीवत्सरूपत्वं महतो, गदारूपत्वं सात्त्विकाहङ्कारस्य, शङ्खरूपत्वं तामसाहङ्कारस्य, शार्ङ्गत्वं ज्ञानस्य, खड्गरूपत्वमज्ञानस्य, तदावरकत्वं मनसश्चक्रत्वं, ज्ञानेन्द्रियाणां शररूपत्वं, सूक्ष्मस्थूलभूतानां वनमालात्वम्" इति । १७ ।

त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम्।
त्वमव्ययः शाश्वतधर्म्मगोप्ता
सनातनस्त्वं पुरुषो मतो मे ॥१८॥

अनादिमध्यान्तमनन्तवीर्य्य-
मनन्तबाहुं शशिसूर्य्यनेत्रम्।
पश्यामि त्वां दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम् ॥१९॥

त्वमिति। त्वमक्षरं परमं परं ब्रह्म वेदितव्यं ज्ञातव्यं मुमुक्षुभिः, त्वमस्य विश्वस्य परं निधानमाश्रयः, त्वमव्ययः रूपान्तरविरहितः, शाश्वतधर्म्मगोप्ता शाश्वतस्य नित्यस्य धर्म्मस्य गोप्ता पालयिता, त्वं सनातनः चिरन्तनः पुरुषो मे मम मतः अभिप्रेतः। १८।

अनादीति। अनादिमध्यान्तम् आदिमध्यान्तरहितम्, अनन्तवीर्य्यम्—'वीर्य्यशब्दः प्रदर्शनार्थः—अनवधिकातिशयज्ञानबलैश्वर्य्यशक्तितेजसां निधानम्' इति श्रीमद्रामानुजः, अनन्तबाहुम्—'सोऽपि प्रदर्शनार्थः—अनन्तबाहूदरवक्त्रादिकम्' इति श्रीमद्रामानुजः, शशिसूर्य्यनेत्रम् चन्द्रादित्यनयनम्, 'शशिवत् सूर्य्यवच्च प्रसादप्रतापयुक्तसर्व्वनेत्रम् देवादीननुकूलान्नमस्कारादिकुर्व्वाणान् प्रति प्रसादः, तद्विपरीतानसुरराक्षसादीन् प्रति प्रतापः' इति श्रीमद्रामानुजः, दीप्तहुताशवक्त्रम्—'प्रदीप्तकालानलवत् संहारानुगुणवक्त्रम्' इति श्रीमद्रामानुजः, स्वतेजसा इदं विश्वं तपन्तं सन्तापयन्तम्—'स्वतेजसा चैतन्यज्योतिषा इदं विश्वं विश्वरूपं तपन्तं प्रकाशयन्तम्; अनादित्वादिसर्व्वविशेषणविशिष्टं विश्वमपि कर्म्मीभूतं तापयन्तं त्वां परं ज्योतीरूपं पश्यामि जानामि; चित्रपटस्थानीयं विश्वरूपं सकलकारकात्मधीवासनोपितं

द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्व्वाः।
दृष्ट्वाद्भुतं रूपमिदं तवोग्रं
लोकत्रयं प्रव्यथितं महात्मन्॥२०॥
अमी हि त्वां सुरसङ्घा विशन्ति
केचिद्भीताः प्राञ्जलयो गृणन्ति।
स्वस्तीत्युक्त्वा सिद्धमहर्षिसङ्घा
वीक्षन्ते त्वां स्तुतिभिः पुष्कलाभिः॥२१॥
रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च।
गन्धर्व्वयक्षासुरसिद्धसङ्घा
वीक्षन्ते त्वां विस्मिताश्चैव सर्व्वे॥२२॥

येन ज्योतिषा प्रकाशते तदेव त्वमसीति जानामीति भावः इति श्रीमन्नीलकण्ठः। १९।

द्यावेति। द्युशब्दः पृथिवीशब्दश्चोपरितनानामधःस्थानाञ्च लोकानां द्योतनार्थौ। द्यावापृथिव्योरिदमन्तरमन्तरीक्षम् एकेन हि त्वया व्याप्तम्, सर्व्वा दिशश्च त्वया व्याप्ताः। हे महात्मन्, तव इदमद्भुतं विस्मापकम् उग्रं क्रूरं भीषणं रूपं दृष्ट्वा लोकत्रयं प्रव्यथितं त्रस्तम्। २०।

अमीति। अमी हि सुरसङ्घा देवसमूहा भीताः सन्तः त्वां विशन्ति प्रविशन्ति, केचित् पुनः प्राञ्जलयः कृतसम्पुटकराः त्वां गृणन्ति स्तुवन्ति। स्वस्तीति उक्त्वा महर्षिसिद्धसङ्घाः महर्षीणां सिद्धानाञ्च सङ्घाः पुष्कलाभिः पूर्णाभिः स्तुतिभिः त्वां वीक्षन्ते। २१।

रुद्रेति। रुद्रादित्या रुद्राश्चादित्याश्च वसवश्च ये च साध्यास्तथामदेवाः विश्वे विश्वदेवाः अश्विनौ मरुतश्च उष्मपाः पितरश्च गन्धर्व्वयक्षा-

रूपं महत् ते बहुवक्त्रनेत्रं
महाबाहो बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥२३॥
नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा
धृतिं न विन्दामि शमञ्च विष्णो ॥२४॥
दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानलसन्निभानि ।
दिशो न जाने न लभे च शर्म्म
प्रसीद देवेश जगन्निवास ॥२५॥

सुरसिद्धसङ्घा गन्धर्व्वाश्च यक्षाश्च असुराश्च सिद्धाश्च तेषां सङ्घाः सर्व्वे विस्मिताः विस्मयापन्ना एव त्वां वीक्षन्ते । २२ ।

रूपमिति । हे महाबाहो, बहुवक्त्रनेत्रं बहुबाहूरुपादं बहूदरं बहुदंष्ट्राकरालं बह्वीभिर्दंष्ट्राभिः करालं भीषणम्, ते तव महत् रूपं दृष्ट्वा लोकाः प्रव्यथिताः त्रस्ताः, तथा अहं प्रव्यथितः त्रस्तः । २३ ।

नभःस्पृशमिति । हे विष्णो सर्व्वव्यापिन्, नभःस्पृशमाकाशव्यापिनं दीप्तं प्रज्वलितम्, अनेकवर्णं विविधवर्णं व्यात्ताननं विवृतमुखं दीप्तविशालनेत्रं प्रज्वलितवृहन्नयनं त्वां दृष्ट्वा प्रव्यथितान्तरात्माऽतीवभीतमनाः धृतिं धैर्य्यं शमं शान्तिञ्च न विन्दामि न लभे । २४ ।

दंष्ट्रेति । दंष्ट्राकरालानि दंष्ट्राभिर्भीषणानि कालानलसन्निभानि प्रलयकालाग्निसदृशानि ते तव मुखानि दृष्ट्वैव दिशः पूर्व्वादिविवेकेन न जाने, न च शर्म्म सुखं लभे । अतः हे देवेश, हे जगन्निवास, प्रसीद प्रसन्नो भव । २५ ।

अमी च त्वां धृतराष्ट्रस्य पुत्राः
सर्व्वे सहैवावनिपालसङ्घैः ।
भीष्मो द्रोणः सूतपुत्रस्तथासौ
सहास्मदीयैरपि योधमुख्यैः ॥२६॥

वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥२७॥

यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीरा
विशन्ति वक्त्राण्यभितो ज्वलन्ति ॥२८॥

अमी चेति । अमी च धृतराष्ट्रस्य पुत्राः सर्व्वे अवनिपालसङ्घैः सहैव त्वां विशन्तीत्यग्रेणान्वयः । तथा अमी भीष्मः द्रोणः सूतपुत्रः कर्णः अस्मदीयैरपि योधमुख्यैः धृष्टद्युम्नादिभिः सह त्वां विशन्तीति सम्बन्धः । २६ ।

वक्त्राणीति । एते सर्व्वे त्वरमाणा धावमानाः ते तव दंष्ट्राकरालानि भयानकानि वक्त्राणि विशन्ति । केचित् चूर्णितैः उत्तमाङ्गैः शिरोभिः दशनान्तरेषु विलग्नाः संदृश्यन्ते । २७ ।

यथेति । यथा नदीनां बहवोऽम्बुवेगाः वारिप्रवाहाः अभिमुखाः समुद्राभिमुखाः सन्तः समुद्रमेव द्रवन्ति द्रुतवेगेन प्रविशन्ति, तथा अमी नरलोकवीरा अभितो ज्वलन्ति सर्व्वतः प्रदीप्यमानानि तव वक्त्राणि विशन्ति । २८ ।

यथा प्रदीप्तं ज्वलनं पतङ्गा
विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोका-
स्तवापि वक्त्राणि समृद्धवेगाः ॥२९॥

लेलिह्यसे ग्रसमानः समन्ता-
ल्लोकान् समग्रान् वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य्य जगत् समग्रं
भासस्तवोग्राः प्रतपन्ति विष्णो ॥३०॥

आख्याहि मे को भवानुग्ररूपो
नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं
न हि प्रजानामि तव प्रवृत्तिम् ॥३१॥

यथेति । यथा पतङ्गाः शलभाः समृद्धवेगा अतीव त्वरमाणा नाशाय आत्मविनाशाय प्रदीप्तं दीप्यमानं ज्वलनमग्निं विशन्ति, तथैव लोकाः समृद्धवेगाः स्वयमेव त्वरमाणाः नाशाय आत्मविनाशाय तवापि वक्त्राणि विशन्ति । २९ ।

लेलिह्यस इति । समग्रान् लोकान् ग्रसमानस्त्वं ज्वलद्भिर्दीप्यमानैर्वदनैः समन्तात् सर्व्वतः लेलिह्यसे आस्वादयसि अतिशयेन भक्षयसि पुनः पुनः लेढि । हे विष्णो, समग्रं जगत् तेजोभिरापूर्य्य तव उग्रास्तीव्राः भासो दीप्तयः प्रतपन्ति सन्तापयन्ति । ३० ।

आख्याहीति । उग्ररूपो भीषणमूर्त्तिः भवान् कः, मे मह्यम् आख्याहि कथय । हे देववर, ते तुभ्यं नमः अस्तु । प्रसीद प्रसन्नो भव । आद्यं सर्व्वकारणं भवन्तं विज्ञातुं विशेषेण ज्ञातुमिच्छामि, तव प्रवृत्तिं चेष्टां न प्रजानामि । ३१ ।

श्रीभगवानुवाच—

कालोऽस्मि लोकक्षयकृत् प्रवृद्धो
लोकान् समाहर्त्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वां न भविष्यन्ति सर्व्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥३२॥
तस्मात् त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्व्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥३३॥
द्रोणञ्च भीष्मञ्च जयद्रथञ्च
कर्णं तथान्यानपि योधवीरान् ।
मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपत्नान् ॥३४॥

को भवानिति प्रश्नस्योत्तरमाह कालोऽस्मीति । लोकक्षयकृत् प्रवृद्धो महान् कालोऽस्मि । लोकान् समाहर्त्तुं संहर्त्तुम् इह प्रवृत्तः, प्रत्यनीकेषु प्रतिपक्षभूतेष्वनीकेषु सैन्येषु ये सर्व्वे योधाः योद्धारः भीष्म-द्रोणकर्णप्रभृतयोऽवस्थिताः त्वामृते त्वां विना अपि न भविष्यन्ति न जीविष्यन्ति । ३२ ।

मया हतानेव त्वं हनिष्यसीति मा शङ्किष्ठा इत्याह तस्मादिति । तस्मात् त्वमुत्तिष्ठ, शत्रून् जित्वा यशो लभस्व, समृद्धं राज्यं भुङ्क्ष्व । मया कालरूपिणैव एते पूर्व्वमेव हताः, हे सव्यसाचिन्, त्वं निमित्तमात्रं भव । ३३ ।

येषां जयेऽर्ज्जुनस्याशङ्कासीत् हतांस्तान् हन्तुं न तस्य कोऽपि प्रयासः स्यादित्याह द्रोणञ्चेति । द्रोणञ्च भीष्मञ्च जयद्रथञ्च कर्णं तथा-

सञ्जय उवाच —

एतच्छ्रुत्वा वचनं केशवस्य
कृताञ्जलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाह कृष्णं
सगद्गदं भीतभीतः प्रणम्य ॥३५॥

अर्ज्जुन उवाच —

स्थाने हृषीकेश तव प्रकीर्त्या
जगत् प्रहृष्यत्यनुरज्यते च ।

न्यानपि योधवीरान् संग्रामकुशलान् भूरिश्रवःप्रभृतीन् मया हतानि त्वं जहि घातय, मा व्यथिष्ठा मा शङ्कथाः, युध्यस्व युद्धं कुरु, रणे सपत्नान् शत्रून् जेतासि जेष्यसि। मयान्तर्यामिणा कालात्मना हतान् जहीत्युक्तिः परमात्मना वधादिप्रवृत्तिं सूचयति, अतस्तस्मिन् मानववद्वैषम्यनैर्घृण्यादिदोषपरिहारेति विप्रतिपत्तिर्व्यर्थवादमुत्थापयति। जन्म भगवदिच्छाप्रतिनिर्मितं यदि नैव कोऽपि दोषः, मृत्यावपि तथैव, तस्यापि कृपान्तरेण जन्मरूपत्वात्। यद्येवं सा भगवति दोषशून्या कथं नास्मदादिभिः साधितं वधकर्म्म भवति नाधर्म्मायास्माकम्। न वयं जीवनदातारः, मृत्युञ्च नवीनतरजीवनं परिणमयितुं समर्थाः। अतोऽस्माकं भगवता नात्र साम्यम्। अर्ज्जुनस्य वधकर्म्मणि प्रवृत्तिः स्वधर्म्मत्वादधर्म्महतानां हननाच्च नाधर्म्मायेत्याचार्य्यस्याभिप्रायः। ३४।

आचार्य्यस्य वचनमिदं श्रुत्वा किमकरोदर्ज्जुनस्तदाह सञ्जय एतदिति। केशवस्य श्रीकृष्णस्य एतत् वचनं श्रुत्वा किरीटी पार्थः वेपमानः कम्पितकलेवरः कृताञ्जलिः नमस्कृत्वा नमस्कृत्य भीतभीतः अतिभयाकुलः सन् प्रणम्य भूयः पुनरपि कृष्णं भयहर्षादिवशादवरुद्धकण्ठत्वेन सगद्गदम् आह। ३५।

एकादशभिरर्ज्जुनस्योक्तिः स्थाने इति। हे हृषीकेश सर्व्वेन्द्रियप्रवर्त्तक अन्तर्यामिन्, तव प्रकीर्त्त्या माहात्म्यकीर्त्तनेन जगत्प्रहृष्यति

रक्षांसि भीतानि दिशो द्रवन्ति
सर्व्वे नमस्यन्ति च सिद्धसङ्घाः ॥३६॥
कस्माच्च ते न नमेरन्महात्मन्
गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।
अनन्त देवेश जगन्निवास
त्वमक्षरं सदसत्तत्परं यत् ॥ ३७ ॥
त्वमादिदेवः पुरुषः पुराण-
स्त्वमस्य विश्वस्य परं निधानम् ।

प्रकर्षेण हर्षं प्राप्नोति, अनुरज्यते च अनुरागञ्चोपैति यत् तत् स्थाने युक्तम् । सर्व्वे पुनरात्मप्रतिपत्त्यनुसारतो भीताः प्रीतियुक्ता वा भवन्ती त्याह—रक्षांसि भीतानि भयाविष्टानि दिशः द्रवन्ति पलायन्ति, सर्व्वे सिद्धसङ्घा नमस्यन्ति नमस्कुर्व्वन्ति च । एतदपि स्थाने इति । ३६ ।

ते सिद्धा नमस्कुर्व्वन्तीति न चित्रं तदाह कस्मादिति । हे महात्मन्, हे अनन्त, हे देवेश, हे जगन्निवास, ब्रह्मणो हिरण्यगर्भस्यापि आदिकर्त्रे 'पञ्चमहाभूतसृष्टिद्वारा ब्रह्माणं सृजते' इति श्रीमन्नीलकण्ठः, अतः गरीयसे गुरुतराय ते तुभ्यं कस्माच्च न नमेरन् न नमस्कुर्य्युः, यत् सत् कार्य्यं यत् असत् कारणम, यत् तत्परं का कारणावस्थातीतं तत् त्वमक्षरं ब्रह्म, त्वमेव सर्व्वरूप इत्यर्थः । ाच श्रीमद्रामानुजः—"न क्षरतीत्यक्षरं जीवात्मतत्त्वम् ...... जीवात्मवस्तु सदसच्च त्वमेव—सदसच्छब्दनिर्द्दिष्टं कार्य्यकारणभावेनावस्थितं प्रकृतितत्त्वं, नामरूपविभागवत्तया कार्य्यावस्थं सच्छब्दनिर्द्दिष्टं, तदनर्हतया कारणावस्थमसच्छब्दनिर्द्दिष्टं, तत्परं यत्—तस्मात्प्रकृतेः प्रकृतिसम्बन्धिनश्च जीवात्मनः परमन्यत् मुक्तात्मतत्त्वं यत् तदपि त्वमेव ।" इति । ३७ ।

त्वमिति । त्वमादिदेवः जगतः स्रष्टृत्वात्, पुरुषः पुरि शयनात्

वेत्तासि वेद्यञ्च परञ्च धाम
त्वया ततं विश्वमनन्तरूप ॥३८॥
वायुर्यमोऽग्निर्वरुणः शशाङ्कः
प्रजापतिस्त्वं प्रपितामहश्च ।
नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ॥३९॥
नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्व्वत एव सर्व्व ।
अनन्तवीर्य्यामितविक्रमस्त्वं
सर्व्वं समाप्नोषि ततोऽसि सर्व्वः ॥४०॥

सर्व्वशरीरशायित्वात्, पुराणश्चिरन्तनः शरीरनाशादप्यविनाशित्वात्, त्वमेव अस्य विश्वस्य परं निधानमाश्रयः, वेत्ता वेद्यञ्च परञ्च धाम प्राप्य-स्थानं त्वमेवासि। कथम्? हे अनन्तरूप, त्वया विश्वं ततं व्याप्तम । ३८ ।

सर्व्वदेवात्मत्वेन स्तौति वायुरिति । त्वं वायुः, यमः, अग्निः, वरुणः, शशाङ्कः, प्रजापतिः कश्यपादिः, प्रपितामहः पितामहस्य ब्रह्मणः पिता, ते तुभ्यं सहस्रकृत्वः नमो नमोऽस्तु, पुनश्च भूयोऽपि ते तुभ्यं नमो नमः । ३९ ।

"वासुदेवः सर्व्वम्" (७।१९) इत्यत्रोक्तस्य सर्व्वपदस्य सार्थकतां स्मरन् स्तौति नम इति। पुरस्तादग्रभागे ते तुभ्यं नमः, अथ पृष्ठतः ते तुभ्यं नमः, हे सर्व्व सर्व्वत एव ते तुभ्यं नमोऽस्तु ; अनन्तवीर्य्यामितविक्रमः अनन्तं वीर्यं सामर्थ्यं यस्य तथा अमितो विक्रमः पराक्रमो यस्य स त्वं सर्व्वं समाप्नोषि—'सर्व्वं समस्तं जगत् प्राप्नोषि सम्यगेकेनात्मना व्याप्नोषि अतस्तस्मादसि सर्व्वः त्वया विनाभूतं न किञ्चिदस्तीत्यर्थः' इति श्रीमच्छङ्करः ; 'सर्व्वमात्मतया समाप्नोषि ततः सर्व्वोऽसि—यस्त्वं

सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानं तवेदं
मया प्रमादात् प्रणयेन वापि ॥४१॥

यच्चावहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ।
एकोऽथवाप्यच्युत तत्समक्षं
तत् क्षामये त्वामहमप्रमेयम् ॥४२॥

सर्वं चिदचिद्वस्तुजातमात्मतया समाप्नोषि, अतः सर्वस्य चिदचिद्वस्तुजातस्य त्वच्छरीरतया त्वत्प्रकारत्वात् सर्वप्रकारस्त्वमेव सर्वशब्दवाच्योऽसीत्यर्थः' इति श्रीमद्रामानुजः ; 'सर्वं विश्वं सम्यगन्तर्बहिश्च समाप्नोषि व्याप्नोषि सुवर्णमिव कनककुण्डलादि स्वकार्यं व्याप्य वर्त्तसे ततः सर्वस्वरूपोऽसि' इति श्रीमच्छ्रीधरः ; 'सर्वं समाप्नोषि एकीभावेनाससन्तात् व्याप्नोषि ततो हेतोः सर्वः' इति श्रीमन्नीलकण्ठः । ४० ।

इदानीं स्वापराधं क्षमापयति सखेति । सखा इति मत्वा प्रसभमविनयेन हे कृष्ण, हे यादव, हे सखे इति यदुक्तं तत् तव महिमानं महत्त्वम्, इदं विश्वरूपम्, इममिति पुंल्लिङ्गपाठे इमं विश्वरूपात्मकं महिमानम् अजानता मया प्रमादादनवहितचित्ततया प्रणयेन स्नेहेन वापि उक्तमिति शेषः । ४१ ।

यच्चेति । यच्च अवहासार्थं परिहासार्थं विहारशय्यासनभोजनेषु एको जनान्तरविरहितोऽथवा तत्समक्षं जनसन्निधौ असत्कृतोऽसि लङ्घितमर्यादोऽसि, हे अच्युत तादृशामहरवहारेणाप्यच्युतस्वभाव, त्वामप्रमेयमचिन्त्यप्रभावमहं क्षामये क्षमापये । ४२ ।

पितासि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रतिमप्रभाव ॥४३॥

तस्मात्प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियायार्हसि देव सोढुम् ॥४४॥

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥४५॥

पितेति। हे अप्रतिमप्रभाव, न विद्यते प्रतिमा उपमा यस्य तत्प्रभावस्य स त्वं चराचरस्य स्थिरचरस्य लोकस्य प्राणिजातस्य त्वं पिता जनयितासि। अस्य जगतः पूज्यः गरीयान् गुरुतरः गुरुः स्वामी शास्त्रोपदेष्टा चासि, लोकत्रयेऽपि त्वत्समो नास्ति, कुतस्त्वत्तोऽन्योऽभ्यधिकः—द्वितीयस्येश्वरस्याभावात् यस्य समो नास्ति तस्याधिकः कोऽपि स्यादित्यसम्भवमेवेति सरलार्थः। ४३।

तस्मादिति। यस्मादेवं तस्मात् प्रणम्य नमस्कृत्य कायं देहं प्रणिधाय प्रकर्षेण नीचैर्धृत्वा त्वामीड्यं स्तुत्यमीशं प्रसादये प्रसादं कारयामि। पिता यथा पुत्रस्य, सखा यथा सख्युः, प्रियः यथा प्रियायाः अपराधं क्षमते, तथा, हे देव, सोढुं क्षन्तुमर्हसि। अत्रेव-शब्दलोपः सन्धिश्चार्षः। ४४।

एवं क्षमापयन् स्वाभीष्टं प्रार्थयते अदृष्टपूर्वमिति। अदृष्टपूर्वं

किरीटिनं गदिनं चक्रहस्त-
मिच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो भव विश्वमूर्त्ते ॥४६॥

रूपं दृष्ट्वा हृषितोऽस्मि उल्लसितोऽस्मि, तथा करालरूपञ्च दृष्ट्वा मनो मे भयेन प्रव्यथितम्, अतः हे देव, हे देवेश, हे जगन्निवास, तदेव रूपं धारणाविषयभूतं मे मह्यं दर्शय । ४५ ।

किन्तद्रूपं तदाह किरीटिनमिति । हे सहस्रबाहो, हे विश्वमूर्त्ते, किरीटिनं गदिनं चक्रहस्तं तथैव अहं त्वां द्रष्टुमिच्छामि, अतः तेनैव चतुर्भुजेन रूपेण मम धारणाविषयो भव । स्थूलधारणायां विश्वरूपम्, सूक्ष्मधारणायां चतुर्भुजरूपं यथा भागवते "जितासनो जितश्वासो जितसङ्गो जितेन्द्रियः । स्थूले भगवतो रूपे मनः सन्धारयेद्धिया ॥ विशेषस्तस्य देहोऽयं स्थविष्ठस्य स्थवीयसाम् । यत्रेदं दृश्यते विश्वं भूतं भव्यं भवच्च सत् ॥ आण्डकोषे शरीरेऽस्मिन् सप्तावरणसंयुते । वैराजः पुरुषो योऽसौ भगवान् धारणाश्रयः ॥ पातालमेतस्य हि पाद-मूलं पठन्ति पार्ष्णिप्रपदे रसातलम् । महातलं विश्वसृजोऽथ गुल्फौ तलातलं वै पुरुषस्य जङ्घे ।" (भा, २स्क, १अ, २३—२६श्लो) इत्यादि । "केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम् । चतु-र्भुजं कञ्जरथाङ्गशङ्खगदाधरं धारणया स्मरन्ति ॥" (भा, २स्क २अ, ८श्लो) इत्यादि । वैष्णवसिद्धान्तकृता श्रीमता बलदेवेन वेदान्तस्यमन्तके रूपत्रयं साधितमानन्दसंहितावचनेन—"स्थूलमष्टभुजं प्रोक्तं सूक्ष्म-ञ्चैव चतुर्भुजम् । परन्तु द्विभुजं प्रोक्तं तस्मादेतत्त्रयं यजेत् ॥" इति । लोकातीतपुरुषे धारणार्थं कल्पितमिदं रूपम्, न तु स्वयं द्विभुज एव । अतएव "स्वकं रूपं दर्शयामास भूयः" (११।५०) इत्यत्र श्रीमन्नीलकण्ठ आह—"स्वकं मानुषं रूपं भूयः पुनर्दर्शयामास, यदर्ज्जुनेन प्रार्थितं चतुर्भुजं धारणाविषयं तदपि तिरोदधे इत्यर्थः" इति । शङ्खचक्रादि-